प्रकृतीः प्रजाः कार्यार्थिनीः अवेक्षितुं दुष्टादुष्टपरिज्ञानार्थं द्रष्टुं
व्यवहारासनं धर्मासनं आददे स्वीचकार। प्रवयाःस्थविरः वृ
रघुः तु। "प्रवयाः स्थविरो वृद्धः" इत्यमरः। धारणां चित्तस्यै
परिचेतुं अभ्यसितुं उपांशु विजने। "उपांशु विजने प्रोक्तम्"
हलायुधः। कुशैः ( दर्भैः )पूतं ( पवित्रं ) विष्टरं आसनं आ
"यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि। धारणा प्रो
सद्भिर्योगशास्त्रविशारदैः",इति वसिष्ठः ॥१८॥

समासाः—नृणां पतिः ष० त०। व्यवहारस्य आसनम् ष० त०
कुशैः पूतम् तृ० त०। प्रकृष्टं वयः यस्य बहु० ॥१८॥

विवृतिः—व्यवहारान् नृपः पश्येदिति याज्ञवल्क्यधर्मशास्त्रा
नुसारेण तरुणो राजाऽजः प्रत्यहं प्रजानां कार्याकार्यनिर्णयार्थं
कार्यासनमध्यतिष्ठत। वृद्धो राजा रघुस्तावद् रहसि चित्तैकाग्र्य
स्याभ्यासं विधातुं पवित्रं दर्भासनमध्यतिष्ठत ॥१८॥

Derivation:—अव+ईक्ष्+इट्+तुमुन्=अवेक्षितुम्। वि+
अव+हृ+घञ्=व्यवहारः। आस्+ल्युट् ( अन ) आसनं। आस्यते
अस्मिन्निति। परि+चि+तुमुन्=परिचेतुम्। उप+अंश+उ=उपांशु
धृ+णिच्+युच् ( अन ) धारणा। अज+असुन् ( वीभावः अज
धातोः ) वयस्। वि+स्तॄ+अप् ( षत्वम् ) विष्टरः ॥१८॥

❀ ❀ ❀

अनयत्प्रभुशक्तिसम्पदा वशमेको नृपतीननन्तरान्।
अपरः प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान् ॥१९॥

अन्वयः—एकः अनन्तरान् नृपतीन् प्रभुशक्तिसम्पदा व

न् अपरः प्रणिधानयोग्यया शरीरगोचरान् पञ्च मरुतः वशं न् ॥१९॥

*Translation*:—The one (Aja) by the eminence of his eign power brought under his control the neighbouring es; while the other (Raghu) by the practice of profound tation subdued the five vital airs existing in the body. 19

संजीविनी:—एक इति। एकः अन्यतरः अजः इत्यर्थः। अनन् स्वभूम्यनन्तरान् (स्वदेशमर्यादासमीपस्थान्) नृपतीन् च्यपार्ष्णिग्राहादीन् प्रभुशक्तिसम्पदा कोशदण्डमहिम्ना वशं त्ततामनयन्। "कोशो दण्डो बलं चैव प्रभुशक्तिः प्रकीर्तिता" मिताक्षरायाम्। अपरः रघुः प्रणिधानयोग्यया समाध्यभ्यासेन ग्याऽभ्यासार्कयोपितोः" इति विश्वः। शरीरगोचरान् देहाश्र- पञ्च मरुतः प्राणादीन् वशं अनयन्। "प्राणोऽपानः समान- ानव्यानौ च वायवः। शरीरस्थाः" इत्यमरः ॥१९॥

समासः:—प्रभोः शक्तिः प० त०। सैव संपत् क०। प्रणि- त्य योग्या प०। शरीरे गोचराः स०। गवि चरन्ति उप०॥१९॥

विवृतिः—राजाऽजः कोशदुर्गसैन्यादीनां प्रभावेणाजितान् यात- दीन् भूपान् स्वायत्तानकरोत्। रघुश्च योगाभ्यासं कृत्वा निज- स्थितान् प्राणापानादीन् पञ्च वायून् जिगाय। अजः शत्रून् व प्राणान् वशीचकार ॥१९॥

Derivation:—शक्+क्तिन्। सम्+पद्+क्विप्। प्र+नि+धा युट्-अन। युज्+घञ् or ण्यत्=योग्या योगमर्हतीति। गो+ +ट। गावः चरन्त्यस्मिन् इति ॥१९॥

प्रकृतीः प्रजाः कार्यार्थिनीःअवेक्षितुं दुष्टादुष्टपरिज्ञानार्थं इत्यर्थः व्यवहारासनं धर्मासनं आददे स्वीचकार। प्रवयाःस्थविरः रघुः तु। "प्रवयाः स्थविरो वृद्धः" इत्यमरः। धारणां चित्तस्थैर्यं परिचेतुं अभ्यसितुं उपांशु विजने। "उपांशु विजने प्रोक्तम्" इति हलायुधः। कुशैः ( दर्भैः )पूतं ( पवित्रं ) विष्टरं आसनं आददे। "यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि। धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः", इति वसिष्टः॥१८॥

समासाः—नृणां पतिः प० त०। व्यवहारस्य आसनम् प० त०। कुशैः पूतम् तृ० त०। प्रकृष्टं वयः यस्य बहु०॥१८॥

विवृतिः—व्यवहारान् नृपः पश्येदिति याज्ञवल्क्यधर्मशास्त्रानुसारेण तरुणो राजाऽजः प्रत्यहं प्रजानां कार्याकार्यनिर्णयार्थं कार्यासनमध्यतिष्ठत्। वृद्धो राजा रघुस्तावद् रहसि चित्तैकाग्र्यस्याभ्यासं विधातुं पवित्रं दर्भासनमध्यतिष्ठत्॥१८॥

Derivation:—अव+ईक्ष्+इट्+तुमुन्=अवेक्षितुम्। वि+अव+हृ+घञ्=व्यवहारः। आस्+ल्युट् ( अन ) आसनं। आस्यते अस्मिन्निति। परि+चि+तुमुन्=परिचेतुम्। उप+अंश+उ=उपांशु। धृ+णिच्+युच् ( अन ) धारणा। अज+असुन् ( वीभावः अजधातोः ) वयस्। वि+स्तृ+अप् ( षत्वम् ) विष्टरः॥१८॥

अनयत्प्रभुशक्तिसम्पदा वशमेको नृपतीननन्तरान्।
अपरः प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान्॥१९॥

अन्वयः—एकः अनन्तरान् नृपतीन् प्रभुशक्तिसम्पदा

अमित्रे। दह्+ल्युट्। ज्ञान+मयट्। वह्+नि ॥२०॥

पणबन्धमुखान् गुणानजः षडुपायुङ्क्त समीक्ष्य तत्फलम्।
रघुरप्यजयद्गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः ॥२१॥

अन्वयः—अजः पणबन्धमुखान षड् गुणान तत्फलं समीक्ष्य उपायुङ्क्त। समलोष्टकाञ्चनः रघुरपि गुणत्रयं प्रकृतिस्थं अजयत् ॥२१॥

*Translation:*—Aja employed the six expedients beginning with peace after having examined their results; Raghu, on his part, with whom gold and a clod of earth were of equal value, conquered the three qualities (activity, darkness and virtue), inherent in nature. 21

संजी०—"पणबन्धः सन्धिः" इति कौटिल्यः। अजः पणबन्धमुखान्सन्ध्यादीन्षड्गुणान्। "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड् गुणाः" इत्यमरः। तत्फलं तेषां गुणानां फलं समीक्ष्य आलोच्य उपायुङ्क्त। फलिष्यन्तमेव गुणं प्रायुङ्क्त इत्यर्थः। "प्रोपाभ्यां युजेरयज्ञपात्रेषु" इत्यात्मनेपदम्। समं तुल्यतया भावितं लोष्टं मृत्पिण्डः काञ्चनं सुवर्णं च येन स समलोष्टकाञ्चनः। निस्पृह इत्यर्थः। "लोष्टानि लेष्टवः पुंसि" इत्यमरः। रघुः अपि गुणत्रयं सत्त्वादिकम्। "गुणाः सत्त्वं रजस्तमः" इत्यमरः। प्रकृतौ साम्यावस्थायां एव तिष्ठतीति प्रकृतिस्थं पुनर्विकारशून्यं यथा तथा अजयत् ॥२१॥

समासाः—पणस्य बन्धः ष०। स मुखं येषां ते बहु०। प्रकृतौ तिष्ठति उप०। लोष्टं च काञ्चनं च लोष्टकाञ्चने द्वन्द्वः। समे लो० यस्य बहु० ॥२१॥

अमित्रे। दह्+ल्युट्। ज्ञान+मयट्। वह्+नि ॥२०॥

पणबन्धमुखान् गुणानजः षडुपायुङ्क्त समीक्ष्य तत्फलम्।
रघुरप्यजयद्गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः ॥२१॥

अन्वयः—अजः पणबन्धमुखान् षड् गुणान् तत्फलं समीक्ष्य उपायुङ्क्त। समलोष्टकाञ्चनः रघुरपि गुणत्रयं प्रकृतिस्थं अजयत् ॥२१॥

*Translation*:—Aja employed the six expedients beginning with peace after having examined their results; Raghu, on his part, with whom gold and a clod of earth were of equal value, conquered the three qualities (activity, darkness and virtue), inherent in nature. 21

संजी०—"पणबन्धः सन्धिः" इति कौटिल्यः। अजः पणबन्धमुखान्सन्ध्यादीन्षड्गुणान्। "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड् गुणाः" इत्यमरः। तत्फलं तेषां गुणानां फलं समीक्ष्य आलोच्य उपायुङ्क्त। फलिष्यन्तमेव गुणं प्रायुङ्क्त इत्यर्थः। "प्रोपाभ्यां युजेरयज्ञपात्रेषु" इत्यात्मनेपदम्। समं तुल्यतया भावितं लोष्टं मृत्खण्डः काञ्चनं सुवर्णं च येन स समलोष्टकाञ्चनः। निस्पृह इत्यर्थः। "लोष्टानि लेष्टवः पुंसि" इत्यमरः। रघुः अपि गुणत्रयं सत्त्वादिकम्। "गुणाः सत्त्वं रजस्तमः" इत्यमरः। प्रकृतौ साम्यावस्थायां एव तिष्ठतीति प्रकृतिस्थं पुनर्विकारशून्यं यथा तथा अजयत् ॥२१॥

समासाः—पणस्य बन्धः ष०। स मुखं येषां ते बहु०। प्रकृतौ तिष्ठति उप०। लोष्टं च काञ्चनं च लोष्टकाञ्चने द्वन्द्वः। समे लो० यस्य बहु० ॥२१॥

विवृतिः—अजः सन्धिविग्रहादीनां परिणामस्य विचारं कृ तान् सर्वान् गुणान् साधनानि वा प्रायोजयत्। तेन च शत्रुः स पराजयं व्यदधात्। रघुः पुनः सर्वेषु वस्तुषूच्चावचेषु नि... सन् सत्वरजस्तमादीन् प्रकृतिगतान् गुणानजयत् ॥२१॥

Derivation:—सम्+ईन्+ल्यप्। प्र+कृ+क्तिन्। स्था+... ॥२१॥

न नवः प्रभुरा फलोदयात्स्थिरकर्मा विरराम कर्मणः।
न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात् ॥२२॥

अन्वयः—स्थिरकर्मा नवः प्रभुः आ फलोदयात् कर्मणः न विरराम। स्थिरधीः नवेतरश्च आ परमात्मदर्शनात् योगविधेः न विरराम ॥२२॥

*Translation:*—Neither the new lord, steady in action ceased from his undertakings until the rise of their result or the attainment of the fruits, nor did the firm-minded lord other than the new (the old king) desist from the practice of profound meditation until the vision of the supreme soul. 22

संजी०—स्थिरकर्मा फलोदयकर्मकारी नवः प्रभुः अजः आ फलोदयात् फलोदयसिद्धिपर्यन्तं कर्मणः आरम्भात् न विरराम निवृत्तः। "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" इत्यपादाने पंचमी। "व्याङ्परिभ्यो रमः" इति परस्मैपदम्। स्थिरधीः निश्चल चित्तः नवेतरः रघुः च आ परमात्मदर्शनात् परमात्मसाक्षात्कारपर्यन्तं योगविधेः चित्तानुसन्धानात् न विरराम ॥२२॥

समासाः—स्थिरं कर्म यस्य बहु० । योगस्य विधिः प० । स्थिरा धीः यस्य बहु० । परमः आत्मा कर्म० । तस्य दर्शनम् प० ॥२२॥

विवृतिः—उभावपि पितापुत्रौ महापुरुषौ । राज्यकर्मणि राजाऽजः समाधिकर्मणि रघुः फलप्राप्तिपर्यन्तं प्रयतमानौ तस्थतुः । "प्रारब्धमुत्तमजनाः न कदापि परित्यजन्ति विघ्नैः पुनः पुनरपि प्रतिहन्यमाना अपि"। यावत्सिद्धि अजः साधनात् तथा च रघुः परब्रह्मसाक्षात्कारं यावत् समाधेर्न निवृत्तौ । "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते ॥ इति गीतावचनोक्तस्वरूपो रघुरासीत् ॥२२॥

Derivation:—उन्+इ–अच्=उदयः । स्था+किरच्=स्थिरः । कृ+मनिन्=कर्मन् । युज्=घञ्=योगः । वि+धा+कि=विधिः । नु+अप्=नवः । दृश्+ल्युट्=दर्शनम् ॥२२॥

इति शत्रुषु चेन्द्रियेषु च प्रतिषिद्धप्रसरेषु जाग्रतौ ।
प्रसितावुदयापवर्गयोरुभयीं सिद्धिमुभाववापतुः ॥२३॥

अन्वयः—इति प्रतिषिद्धप्रसरेषु शत्रुषु च इन्द्रियेषु च जाग्रतौ उदयापवर्गयोः प्रसितौ उभौ उभयीं सिद्धिं अवापतुः ॥२३॥

*Translation:*—Thus both of them (Aja and Raghu) who were watchful to the enemies and the sense-organs (respectively) whose course was curbed and who were intent on attaining worldly prosperity and the final beatitude, obtained respectively their desired objects. 23

संजी०—इति एवं प्रतिषिद्धः प्रसरः स्वार्थप्रवृत्तिः येषां तेषु

शत्रुषु च इन्द्रियेषु च जाग्रतौ अप्रमत्तौ उदयापवर्गयोः अभ्युद मोक्षयोः प्रसितौ आसक्तौ। "तत्परे प्रसितासक्तौ" इत्यमरः। अजरघू उभयीं द्विविधां अभ्युदयमोक्षरूपाम्। "उभादुदात्तो नित्य इति तयप् प्रत्ययस्य अयजादेशः। "टिड्ढा......" इति ङीप्। सिद्धिं फलं अवापतुः। उभौ उभे सिद्धी यथासंख्यं अवाप इत्यर्थः ॥२३॥

समासा:—उदयश्च अपवर्गश्च द्वन्द्वः ॥२३॥

विवृति:—एवं नृपोऽजोऽरीणां कर्मसु नियन्त्रणं कृत्वा तान्सर्वा न्वशीकृत्यात्मनोऽभ्युदयविषयेऽवधानं दत्त्वा यशः प्राप्नोत् सार्व भौमश्च बभूव। रघुरपि सर्वेन्द्रियाणि जित्वा मोक्षार्थमुद्योगं विधाय जननमरणमुक्तिमलभत। अज ऐहिकैश्वर्यं रघुः पारलौकिकैश्वर्यं च प्राप्तवन्तौ ॥२३॥

Derivation:—शद्+त्रुन्=शत्रुः। इन्द्र+घ=इन्द्रियम्। प्रति+ सिध्+क्त। प्र+सृ+अप्=प्रसरः। जागृ+शतृ (अत्)=जाग्रत्। प्र+सो+क्त=प्रसितः। अप+वृज्+घञ् भावे=अपवर्गः। सिध+ क्तिन् ॥२३॥

अथ काश्चिदजव्यपेक्षया गमयित्वा समदर्शनः समः।
तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः ॥२४॥

अन्वय:—अथ रघुः समदर्शनः अजव्यपेक्षया काश्चित्सम गमयित्वा योगसमाधिना अव्ययं तमसः परं पुरुषं आपत् ॥२४॥

*Translation:*—Th who look all bein with an equal eye, some of rega

or Aja, obtained, by means of profound meditation, the upreme spirit, imperishable and beyond darkness (illusion). 24

संजी०—अथ ( कालेन ) रघुः समदर्शनः सर्वभूतेषु समदृष्टिः सन् अजव्यपेक्षया अजकाङ्क्षानुरोधेन काश्चित् समाः कतिचिद्वर्षाणि । "समा वर्षे समं तुल्यम्" इति विश्वः । गमयित्वा नीत्वा योगसमाधिना ऐक्यानुसन्धानेन । "संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः" इति वसिष्टः । अव्ययं अविनाशिनं तमसः परं अविद्यायाः परं मायातीतमित्यर्थः । पुरुषं परमात्मानं आपत् प्राप । सायुज्यं प्राप्तः इत्यर्थः ॥२४॥

समासाः—अजस्य व्यपेक्षा ष० । समं दर्शनं यस्य बहु० । न व्ययः यस्य बहु० । पुरि शेते असौ पुरुषः पृषोदरादिः । योगः एव समाधिः कर्म० ॥२४॥

विवृतिः—पित्रा देहत्यागः किंचित्कालपर्यन्तं न कर्तव्य इत्यजस्येच्छाऽऽसीत् । अत एव रघुः कतिचन वर्षाणि संसारेऽस्मिन्नीत्वाऽथ प्राणायामेन मृत्योः परं मायातीतं परमात्मस्वरूपं प्राप्तः । केनचित्कालेन वृद्धो रघुर्देहमत्यजत ॥२४॥

Derivation:—वि+अप+ईक्ष्+अ । गम्+णिच्+क्त्वा । सम्+अच्+टाप्=समा । तम्+असच्=तमस् । वि+इ+अच्=व्ययः । सम्+आ+धा+कि=समाधिः ॥२४॥

❧ ❧ ❧

श्रुतदेहविसर्जनः पितुश्चिरमश्रूणि विमुच्य राघवः ।
विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित् ॥२५॥

शत्रुषु च इन्द्रियेषु च जाग्रतौ अप्रमत्तौ उदयापवर्गयो। मोक्षयोः प्रसितौ आसक्तौ। "तत्परे प्रसितासक्तौ" इत्य अजरघू उभयीं द्विविधां अभ्युदयमोक्षरूपाम्। "उभादुदा इति तयप् प्रत्ययस्य अयजादेशः। "टिड्ढा......" इ सिद्धिं फलं अवापतुः। उभौ उभे सिद्धी यथासंख्यं इत्यर्थः ॥२३॥

समासा:—उदयश्च अपवर्गश्च द्वन्द्वः ॥२३॥

विवृति:—एवं नृपोऽजोऽरीणां कर्मसु नियन्त्रणं कृत्वा त न्वशीकृत्यात्मनोऽभ्युदयविषयेऽवधानं दत्त्वा यशः प्राप्तो भौमश्च बभूव। रघुरपि सर्वेन्द्रियाणि जित्वा मोक्षार्थमुद्योगं जननमरणमुक्तिमलभत। अज ऐहिकैश्वर्यं रघुः पारलौकि च प्राप्तवन्तौ ॥२३॥

Derivation:—शद्+त्रुन्=शत्रुः। इन्द्र+घ=इन्द्रियम्। सिध्+क्त। प्र+सृ+अप्=प्रसरः। जागृ+शतृ (अत्)=जा प्र+सो+क्त=प्रसितः। अप+वृज्+घञ् भावे=अपवर्गः। रि क्तिन् ॥२३॥

अथ काश्चिदजव्यपेक्षया गमयित्वा समदर्शनः समः।
तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः ॥२४॥

अन्वय:—अथ रघुः समदर्शनः अजव्यपेक्षया काश्चित्स गमयित्वा योगसमाधिना अव्ययं तमसः परं पुरुषं आपत् ॥२४

*Translation:*—Then Raghu who looked upon all be with an equal eye, having passed some years out of re

रघोः अपत्यं पुमान् राघवः अण् । निष्ठा+ठक् (इक) । यम्+इत् यतते मोक्षाय ॥२५॥

अकरोत्स तदौर्ध्वदैहिकं पितृभक्त्या पितृकार्यकल्पवित् ।

न हि तेन पथा तनुत्यजस्तनयावर्जितपिण्डकाङ्क्षिणः ॥२६॥

अन्वयः—पितृकार्यकल्पवित् सः पितृभक्त्या तदौर्ध्वदैहिकं अकरोत् । तेन पथा तनुत्यजः तनयावर्जितपिण्डकाङ्क्षिणः न हि भवन्ति ॥२६॥

*Translation:*—He who knew the proceedings of the obsequial rites performed the funeral of his father through devotion to him: for those who quit the body in that way are not desirous of the rice-balls offered by their sons. 26

संजी०—पितृकार्यस्य तातश्राद्धस्य कल्पवित् विधानज्ञः सः अजः पितृभक्त्या पितरि प्रेम्णा । करणेन । न पितुः परलोकसुखापेक्षया । मुक्तत्वादिति भावः । तस्य रघोः और्ध्वदैहिकम् । देहादूर्ध्वं भवतीति तत्तिलोदकपिण्डदानादिकमकरोत् । "ऊर्ध्वं देहाच्च" इति वक्तव्यात् ठक् प्रत्ययः । अनुशतिकादित्वात् उभयपदवृद्धिः । ननु कथं भक्तिरेव श्राद्धादिफलप्रेप्साऽपि कस्मान्नाभूदित्याशंक्याह—नहीति । तेन पथा योगरूपेण मार्गेण तनुत्यजः शरीरत्यागिनः पुरुषास्तनयेनावर्जितं दत्तं पिण्डं कांक्षन्तीति तथोक्ताः । न हि भवन्ति ॥२६॥

समासः—देहात् ऊर्ध्वं ऊर्ध्वदेहः पं० स० राजदन्तादित्वात् परनिपातः । पितरि भक्तिः स० त० । पितुः कार्यं ष० । तस्य कल्पः

अन्वयः—अग्निचिन् राघवः पितुः श्रुतदेहविसर्जनः चिरं अश्रूणि विमुच्य अस्य अनग्निं नैष्ठिकं विधिं यतिभिः सार्धं विदधे ॥२५॥

*Translation:*—The son of Raghu, who had kept the sacred fire, heard of his father's resignation of the body, and shedding tears for a long time, performed his obsequies without fire, in the company of recluses. 25

संजी०—अग्निचिन् अग्निं चितवान् आहितवान्। "अग्नौ चेः" इति क्विप् प्रत्ययः स्वयं अग्निचित् इति भावः। राघवः अजः पितुः श्रुतदेहविसर्जनः आकर्णितपितृतनुत्यागः सन् चिरं अश्रूणि विमुच्य विसृज्य अस्य पितुः अनग्निं अग्निसंस्काररहितमित्यर्थः नैष्ठिकं निष्ठायामन्ते भवं विधिं आचारं अन्त्येष्टिं यतिभिः सन्यासिभिः सार्धं सह विदधे चक्रे। अनग्नि विधिं इत्यत्र शौनकः—सर्व संगनिवृत्तस्य ध्यानयोगरतस्य च। न तस्य दहनं कार्यं नैव पिण्डोदकक्रिया॥ निदध्यात्प्रणवेनैव बिले भिक्षोः कलेवरम्। प्रोक्षणं खननं चैव सर्वं तेनैव कारयेत् ॥इति॥२५॥

समासाः—देहस्य विसर्जनं ष० श्रुतं देह० येन बहु०। अग्निं चितवान् उप०। न अग्निः यस्मिन् बहु० ॥२५॥

विवृतिः—आहिताग्निर्गृहस्थो रघोः पुत्रो राजाऽजो यदाऽकर्णोद्यथा रघुणा शरीरं त्यक्तमिति तदाऽत्यन्तदुःखितः स दीर्घकालं रुरोद। अथ च यथा सन्यासिनामन्त्येष्टिरभिहिता तथा तैरेव सह निजपितुरन्त्यं संस्कारमग्निरहितं वसुधाबिलस्थापनरूपं कृतवान् ॥२५॥

Derivation:—श्रु+क्त। वि+सृज्+ल्युट्। वि+मुच+ल्य

रघोः अपत्यं पुमान् राघवः अण् । निष्ठा+ठक् ( इक ) । यम्+इत् यतते मोक्षाय ॥२५॥

अकरोत्स तदौर्ध्वदैहिकं पितृभक्त्या पितृकार्यकल्पवित् ।
न हि तेन पथा तनुत्यजस्तनयावर्जितपिण्डकाङ्क्षिणः ॥२६॥

अन्वयः—पितृकार्यकल्पवित् सः पितृभक्त्या तदौर्ध्वदैहिकं अकरोत् । तेन पथा तनुत्यजः तनयावर्जितपिण्डकाङ्क्षिणः न हि भवन्ति ॥२६॥

*Translation:*—He who knew the proceedings of the obsequial rites performed the funeral of his father through devotion to him; for those who quit the body in that way are not desirous of the rice-balls offered by their sons. 26

संजी०—पितृकार्यस्य तातश्राद्धस्य कल्पवित् विधानज्ञः सः अजः पितृभक्त्या पितरि प्रेम्णा । करणेन । न पितुः परलोकसुखापेक्षया । मुक्तत्वादिति भावः । तस्य रघोः और्ध्वदैहिकम् । देहादूर्ध्वं भवतीति तत्तिलोदकपिण्डदानादिकमकरोत् । "ऊर्ध्वं देहाच्च" इति वक्तव्यात् ठक् प्रत्ययः । अनुशतिकादित्वात् उभयपदवृद्धिः । ननु कथं भक्तिरेव श्राद्धादिफलप्रेप्साऽपि कस्मान्नाभूदित्याशंक्याह—नहीति । तेन पथा योगरूपेण मार्गेण तनुत्यजः शरीरत्यागिनः पुरुषास्तनयेनावर्जितं दत्तं पिण्डं कांक्षन्तीति तथोक्ताः । न हि भवन्ति ॥२६॥

समासाः—देहात् ऊर्ध्वं ऊर्ध्वदेहः पं० स० राजदन्तादित्वात् परनिपातः । पितरि भक्तिः स० त० । पितुः कार्यं ष० । तस्य क०

प० । तं नेति उप० । तनुं त्यजन्ति उप० । तनयावर्जितं पिण्ड कर्म० । तत् कांक्षन्ति उप० ॥२६॥

विवृतिः—अजस्तातस्याऽऽत्मनिमग्नतामजानात् । रघुश्च सन्यासित्वान्मुक्त एव । तस्मात्तस्यात्मनः श्राद्धादिकर्मेच्छा नासीत् । तथापि जनकप्रेम्णाऽजः पिण्डादिकं यथाशास्त्रं व्यदधात् । ये योगेन शरीरं विसर्जयन्ति तेषां तिलोदकादिविधानं न विधीयते । ते तु सायुज्यभाजो मुक्ता एव ॥२६॥

Derivation:—ऊर्ध्वदेहे भवं और्ध्वदेहिकं ठञ् (इक) उभयपदवृद्धिः । भज्+क्तिन् । पाति इति पा+तृच् । कृ+ण्यत् । विद्+क्विप् । त्यज्+क्विप् । आ+वृज्+क्त । पिण्ड+कांक्ष्+णिनिः ॥२६

❦ ❦ ❦

स परार्ध्यगतेरशोच्यतां पितुरुद्दिश्य सदर्थवेदिभिः ।
शमिताधिरधिज्यकार्मुकः कृतवानप्रतिशासनं जगत् ॥२७॥

अन्वयः—परार्ध्यगतेः पितुः अशोच्यतां उद्दिश्य सदर्थवेदिभिः शमिताधिः सः अजः अधिज्यकार्मुकः जगत् अप्रतिशासनं कृतवान् ॥२७॥

*Translation:*—Then that king Aja, whose mental grief was assuaged by philosophers, men knowing the highest truth, by pointing out to him that his father should not be grieved for as he had gone to the highest bliss, rendered, with his bow well strung, the world destitute of a rival command, i.e. brought the world under his sole control. 27

संजी०—परार्ध्यगतेः (मोक्षगामित्वात्) प्रशस्तगतेः प्राप्त-

आसीत्‌ प्रथमा बहुरत्नसूः अभूत्‌ अपरा वीरं सुतं अजीजनत्‌ ॥२८॥

*Translation:* The earth and the beautiful young ... Indumati, having obtained him for their husband ... possessed the greatest manly powers, the first became the producer of many jewels and the second gave birth to a brave son. 28

संजी०—क्षितिः मही भामिनी कामिनी इन्दुमती च। "भामिनी कामिनी च" इति हलायुधः। अग्र्यपौरुषं महापराक्रमं उत्कृष्टभोगराशि (शक्तिं) च तमजं पतिमासाद्य प्राप्य। तत्र प्रथमा क्षितिः बहूनि रत्नानि श्रेष्ठवस्तूनि सूते इति बहुरत्नसूः अभूत्। "रत्नं स्वजातिश्रेष्ठेऽपि" इत्यमरः। अपरा इन्दुमती वीरं सुतं अजीजनत्‌ जनयति स्म। जायतेर्णौ लुङि रूपम्। सहोक्त्या ... ह्रस्वमुच्यते ॥२८॥

समासाः—अग्र्यं पौरुषं यस्य ब०। बहूनि रत्नानि (क०) सूते उप० ॥२८॥

विवृतिः—राजा पृथ्वीपतिरुच्यते। अजे राजनि सति देशः समृद्ध आसीत्। तेन भर्त्राऽऽनन्दिता वसुन्धरा समस्तश्रेष्ठवस्तुपूर्णा बभूव। अपरा चाजस्य पत्नीन्दुमती। सपत्नीर्ष्यया साऽपि पुत्रपूर्णा त्सन्ना बभूव। तस्याः शूरस्तनयः सञ्जातः ॥२८॥

Derivation:—भाम्+णिनि or भाम+इनि+ङीप्। आ+सद्+णिच्+ल्यप्। अग्र+यत्। पुरुष+अण्। सू+क्विप् सूः सू+क्त। ॥२८॥

स सुतः कः इत्यावाङ्क्ष्य आह :—

दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥२९॥

अन्वयः—दशरश्मिशतोपमद्युतिं यशसा दशस्वपि दिक्षु श्रुतं दशकण्ठारिगुरुं यं आख्यया दशपूर्वरथं बुधाः विदुः ॥२९॥

*Translation*:—(A son) whose lustre was comparable to that of the thousand rayed-luminary—the sun—, who on account of his glory was known over all the ten quarters, whom the wise knew by the name of "Ratha" with "Daśa" prefixed to it and as one who was the father of the enemy of the tennecked demon (Rāvana). 29

संजी०—दश रश्मिशतानि यस्य सः दशरश्मिशतः सूर्यः । स उपमा यस्याः सा दशरश्मिशतोपमा द्युतिर्यस्य तम् । यशसा करणेन । दशसु अपि दिक्षु आशासु श्रुतं प्रसिद्धम् । दशकण्ठारेः रावणारेः रामचन्द्रस्य गुरुं पितरं यं सुतम् । आख्यया नाम्ना दशपूर्वो दशशब्दपूर्वो रथो रथशब्दः तम् । दशरथमित्यर्थः । बहुव्रीहिरत्र नेष्टः । तदर्थानुपपत्तेः । अनेककोटिरथत्वाच्च दशरथस्य । इत्याशयेन नामैव पूर्वपदं व्यवहितं प्रयुक्तम् । एतदनुसारान्माघेऽपि "हिरण्यपूर्वं कशिपुं प्रचक्षते" इति प्रयुक्तम् । बुधाः विद्वांसः विदुः विदन्ति जानन्ति । "विदो लटो वा" इति झेः उस् आदेशः ॥२९॥

समासः—रश्मीनां शतानि ष० तदनन्तरं बहु० । टीकायाम् । दश इति पूर्वं पदं यस्य रथपदस्य स दशपूर्वः बहु० । स चासौ रथश्च इति क० । दश कण्ठाः यस्य ब० । तस्य अरिः ष० तस्य गुरुः ष० ॥२९॥

आसीत् प्रथमा बहुरत्नसूः अभूत् अपरा वीरं सुतं अजीजनत्॥

*Translation:*—The earth and the beautiful young Indumati, having obtained him for their husband possessed the greatest manly powers, the first became producer of many jewels and the second gave birth to brave son. 28

संजी०—क्षितिः मही भामिनी कामिनी इन्दुमती च। "भामिनी कामिनी च" इति हलायुधः। अग्र्यपौरुषं महापराक्रमं उत्कृष्टभोगराशि (शक्तिं) च तमजं पतिमासाद्य प्राप्य। तत्र प्रथमा क्षितिः बहूनि रत्नानि श्रेष्ठवस्तूनि सूते इति बहुरत्नसूः अभूत्। "रत्नं स्वजातिश्रेष्ठेऽपि" इत्यमरः। अपरा इन्दुमती वीरं सुतं अजीजनत् जनयति स्म। जायतेर्णौ लुङि रूपम्। सहोक्त्या ... दृश्यमुच्यते ॥२८॥

समासाः—अग्र्यं पौरुषं यस्य ब०। बहूनि रत्नानि (क०) सूते उप० ॥२८॥

विवृतिः—राजा पृथ्वीपतिरुच्यते। अजे राजनि सति देशः समृद्ध आसीत्। तेन भर्त्राऽऽनन्दिता वसुन्धरा समस्तश्रेष्ठवस्तुपूर्णा बभूव। अपरा चाजस्य पत्नीन्दुमती। सपत्नीर्षया साऽपि पुत्रपूर्णोत्सङ्गा बभूव। तस्याः शूरस्तनयः सञ्जातः ॥२८॥

Derivation:—भाम्+णिनि or भाम+इनि+ङीप्। आ+सद्+णिच्+ल्यप्। अग्र+यत्। पुरुष+अण्। सू+क्विप् सूः। सू+क्त। ॥२८॥

प्रसवश्च द्व०। न ऋणं यस्य सः अनृणः ब० ( तस्य भावः )। उष्णाः दीधितयः यस्य ब० ॥३०॥

विवृतिः—प्रत्येकः पुरुषो देवादीनां त्रिभिर् ऋणैर्जायते। स च ऋणात्तस्माद्वेदाध्ययनेन यज्ञविधिना पुत्रोत्पादनेन च मुक्तो भवति। अजेन वेदपठनं यज्ञश्च कृतः। तस्य तनयोऽपि संजातः। अत एव स सर्वेषामृणादात्मानं मोचयामास। तेन स कुज्झटिकायास्तुषारपटलाद्वा निर्गतः सूर्यो यथा देदीप्यमानो दृश्यते तथा रेजे ॥३०॥

Derivation:—दिव्+अच्। द्योतते इति देवः। स्वधा+भुज्+क्विप्। यज्+घञ्=यागः। प्र+सू+अप्=प्रसवः। उ+इ+क्वसु-निपातः=उपेयिवान्। परि+धा+किः। मुच्+क्त। दीधी+क्तिन् ॥३०॥

बलमार्तभयोपशान्तये विदुषां सत्कृतये बहु श्रुतम्।
वसु तस्य विभोर्न केवलं गुणवत्ताऽपि परप्रयोजना ॥३१॥

अन्वयः—तस्य विभोः केवलं वसु न गुणवत्ता अपि परप्रयोजना, बलं आर्तभयोपशान्तये, बहु श्रुतं विदुषां सत्कृतये अभूत्॥३१॥

*Translation:*—His bodily strength was for allaying the fears of the grieved and his great learning was for honouring the learned; thus not only the wealth of the mighty king but also his possession of virtues was for the benefit of others. 31

संजीविनी:—तस्य विभोः ( प्रभोः ) अजस्य केवलं वसु धनमेव परप्रयोजनं परोपकारकं नाभूत्। किं तु गुणवत्ताऽपि

विवृतिः—सोऽजपुत्रः सहस्रकिरणः सूर्य इव कान्तिमानासीत् तस्य कीर्तिः सर्वस्मिन संसारे प्रकाशिता। दशरथ इति च तस्य नाम। अस्यैव पुत्रेण श्रीरामचन्द्रेण समस्तविश्वपीडादायकं रावणो मारितः। तत् ज्ञायत एव॥२९॥

Derivation:—उप+मा+अङ्। पुत्+इन्। अश्+असुन् (युन्)=यशस्। श्रु+क्त। आ+ख्या+अङ्। बुध्+क॥२९॥

ऋषिदेवगणस्वधाभुजां श्रुतयागप्रसवैः स पार्थिवः।
अनृणत्वमुपेयिवान्बभौ परिधेर्मुक्त इवोष्णदीधितिः॥३०॥

अन्वयः—श्रुतयागप्रसवैः ऋषिदेवगणस्वधाभुजां अनृणत्वं उपेयिवान् स पार्थिवः परिधेः मुक्तः उष्णदीधितिः इव बभौ॥३०॥

*Translation:*—That king (the lord of the earth), having freed himself from the debt due to the sages, (groups of) gods and the manes—the eaters of Svadhā—by the Vedic study, (performance of) sacrifices and issue (respectively), shone like the hot-rayed sun released from the misty halo. 30

संजी०—श्रुतयागप्रसवैः स्वाध्याययजनसन्तानैः। करणैः। यथासंख्यं ऋषीणां देवगणानां इन्द्रादीनां स्वधाभुजां पितॄणां अनृणत्वं ऋणविमुक्तत्वं उपेयिवान् प्राप्तवान्। "एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा" इति श्रुतेः। सः पार्थिवः अजः परिधेः परिवेशात्। "परिवेशस्तु परिधिः" इत्यमरः। मुक्तः निर्गतः। कर्मकर्ता। उष्णदीधितिः सूर्यः इव बभौ दिदीपे। इत्युपमा॥३०॥

समासाः—ऋषयश्च देवानां गणश्च स्वधाभुजश्च द्वन्द्वः। स्वधा (पूर्वं यद्दत्तं कव्यादि तत्) भुञ्जते इति उप०। श्रुतं च यागश्च

Sachi, Indra, the protector of the gods, in the Nandana garden. 32

संजीविनी:—अवेक्षितप्रजः पालितप्रजः अकुतोभयत्वेन अनुसंहितप्रजः। "नित्यमसिच् प्रजामेधयोः" इति असिच् प्रत्ययः। न केवलं स्त्रैणः इति भावः। शोभना प्रजा यस्य असौ सुप्रजाः सुपुत्रवान्। पुत्रन्यस्तभारः इति भावः। सः अजः कदाचित् देव्या महिष्या इन्दुमत्या सह नगरोपवने नगरस्य पुरस्य उपवने नन्दने नन्दनाख्ये अमरावत्युपकण्ठवने शचीसखः शच्या सह इत्यर्थः। मरुतां देवानां पालयिता इन्द्रः इव विजहार चिक्रीड ॥३२॥

समासः—अवेक्षिताः प्रजाः येन ब०। शोभना प्रजा यस्य ब०। उपगतं वनं प्रादि०। शच्याः सखा ष० त० ॥३२॥

विवृतिः—सर्वेषां लोकानां दैवमानुषीणामापदां निराकरणं तथा च तेषां योगक्षेमं विधाय राज्यभारं पुत्रे दशरथे न्यस्य कस्मिंश्चित्काले राजा महिष्येन्दुमत्या सह राजधानीसमीपे क्रीडोद्याने विलासार्थं गतो यथा स्वर्गस्येश्वरो देवानां रक्षको महेन्द्रः पौलोम्या सह नन्दनवने विनोदनार्थं गच्छति। तत्र च प्रियया सार्धमजः कश्चित्कालं क्रीडां चकार ॥३२॥

Derivation:—अव+ईक्ष्+क्त+प्र+जन्+ड+टाप्+असिच्। शची+सखि+टच्। पाल्+तृन् ॥३२॥

❧ ❧ ❧

... रोधसि दक्षिणोदधेः श्रितगोकर्णनिकेतमीश्वरम्।
...यितुं ययौ रवेरुदगावृत्तिपथेन नारदः ॥३३॥

त्वमपि परप्रयोजना परेषां अन्येषां प्रयोजनं यस्यां सा। निर्वे-
शतेन प्राधान्याद्गुणवत्ताया विशेषणं गम्, [illegible] तु [illegible]।
तथा हि अस्य पौरुषं आर्तानां आपन्नानां भयस्य उपशान्तये निः
धाय। न तु स्वार्थं परपीडनाय वा। बहु भूरि श्रुतं विद्या विदुषं
सत्कृतये सत्काराय। न तु दर्पाय। अभूत। तस्य धनं परोप-
योगीति किं वक्तव्यम्। वस्तुतस्तादृशोऽपि गुणाः परोपयोगिनः
इत्यर्थः॥३१॥

समासाः—टीकायां द्रष्टव्याः ॥३१॥

विवृतिः—अजराजेन निजशरीरशक्तेस्तथैश्वर्यस्योपयोग
स्वार्थसाधनाय न कृतः परं परार्थाय। विद्वानपि स न गर्वयुक्
समर्थोऽपि नान्यपीडकः समृद्धोऽपि नोपभोगलोलुपः। तेन दुःखि-
तानां दुःखं भीतानां भीतिर्दरिद्राणां दारिद्र्यं दूरीकृतम्। सर्वे
पण्डिताश्च पूजिताः ॥३१॥

Derivation:—आ+ऋ+क्त। भी+अच्। शम्+क्तिन्।
विद्+क्वसु=विद्वस्। गुण+मतुप्+तल्+टाप्। प्र+युज्+ल्युट्॥३१॥

स कदाचिदवेक्षितप्रजः सह देव्या विजहार सुप्रजाः।
नगरोपवने शचीसखो मरुतां पालयितेव नन्दने ॥३२॥

अन्वयः—अवेक्षितप्रजः सुप्रजाः सः कदाचिद् देव्या सह
नगरोपवने विजहार शचीसखः मरुतां पालयिता नन्दने इव ॥३२॥

*Translation:*—Once upon a time that king, who looked
well after his subjects and who had an excellent son, sported
with his queen in the city-garden just as does the lord o

अन्वयः—अथ दक्षिणोदधेः रोधसि श्रितगोकर्णनिकेतं ईश्वरं उपवीणयितुं नारदः रवेः उदगावृत्तिपथेन ययौ ॥३३॥

*Translation*:—At this time Nārada (the sage) was going along the path of the sun's return from the north to sing in harmony with his lute unto God Śiva who had taken his abode in the temple of Gokarna on the shores of the southern ocean. 33

संजी०—अथ दक्षिणस्य उदधेः समुद्रस्य रोधसि तीरे श्रितगोकर्णनिकेतं अधिष्ठितगोकर्णाख्यं स्थानं ईश्वरं शिवं उपवीणयितुं वीणया उप समीपे गातुं । "सत्यापपाश"—इत्यादिना वीणाशब्दादुपगानार्थे णिच् प्रत्ययः । ततस्तुमुन् । नारदः मुनिः (नराणां समूहो नारं तद् द्यति खण्डयति कलिदानात् इति नारदः) देवर्षिः रवेः सूर्यस्य उदीचः उत्तरस्याः दिशः आकाशे आवृत्तिः निवर्तनम् । तस्याः पन्था गतिप्रकारः तेन । यथा रविः उत्तरस्याः दिशः व्यावृत्य दक्षिणायनमागच्छति तद्वदित्यर्थ । ययौ जगाम । सूर्योपमानेन अस्यातितेजस्त्वमुच्यते ॥३३॥

समासाः—गोकर्णं निकेतः स० त० । श्रितः गोकर्णनि० येन व० । उद० टोकायाम् ॥३३॥

विवृतिः—अस्मिन्नेव समये परमभागवतो ब्रह्मपुत्रो नारदो देवर्षिराकाशेऽगच्छत् । सूर्यो यथा उत्तरस्या आशाया दक्षिणदिशं गच्छति तद्वदसावपि वीणावादनेन गायन् दक्षिणकाष्ठामव्रजत् । दक्षिणसमुद्रतीरे गोकर्णं नाम महत् क्षेत्रं विद्यते । तत्र महादेवस्य शंकरस्य निवासः । तत्र भगवन्तं सदाशिवं पूजयितुं नारदोऽगात् ॥३३॥

अन्वयः—सुजातयोः स्तनयोः क्षणमात्रसखीं तां अवलोक्य विह्वला नरोत्तमप्रिया तमसा हृतचन्द्रा कौमुदीव निमिमील ॥३७॥

*Translation:*—The beloved wife of the most excellent of men—the king Aja—seeing that garland, only a momentary companion of her well-formed breasts, was instantly excited and closed her eyes in death (died) like the moonlight in which the moon is totally eclipsed by Rāhu. 37

संजीविनी:—सुजातयोः सुजन्मयोः सुन्दरयोरित्यर्थः। स्तनयोः क्षणमात्रं सखीं सखीमिव स्थितां सुजतत्वसाधर्म्यात्स्रजः स्तनसखीत्वमितिभावः। तां स्रजमवलोक्येयद् दृष्ट्वा विह्वला परवशा नरोत्तमप्रिया इन्दुमती। तमसा राहुणा। "तमस्तु राहुः स्वर्भानुः" इत्यमरः। हृतचन्द्रा कौमुदी चन्द्रिकेव। निमिमील मुमोह। ममारेत्यर्थः। "निमीलनं दीर्घनिद्राच" इति हलायुधः। कौमुद्या निमीलनं अतिसंहारः॥ ३७ ॥

समासाः—क्षणं एव क्षणमात्रम्। मयूरव्यंसकादित्वात् नित्य समासः। क्षण० सखी–द्वि०। शोभनं जातं ययोः बहु०। नरेषूत्तमः स०। तस्य प्रिया ष०। हृतः चन्द्रः यस्यां द०॥३७॥

विवृतिः—आत्मनः कुचोपरि पतितां तां पुष्पमालां दृष्ट्वाऽजपत्नीन्दुमती मुहूर्तमेव चकिता सद्यो ममार। सा दिव्यमाला तस्या विस्तीर्णयोरुरोजयोः कञ्चितकालमेवासीत्। किन्तु तेनावस्थानेनैव सा क्षोभयामास तथाच जघान राज्ञीम्। राहुणा चन्द्रमसि ग्रस्ते चन्द्रिका यथा लुप्ता भवति तारापतेर्यथा तेजो ह्रियते तद्वत्तस्या आत्मा मालयाऽपहृतः॥ ३७ ॥

Derivation:—जन+क्त। अव+लोक्+ल्यप् (पूर्वकाले)।

संजी०—सा (पूर्वोक्ता) अमरस्रक् दिव्यमाला मधुगन्धातिशयेन मकरन्दसौरभ्यस्य अतिशयेन आधिक्येन । ... । वीरुधां लतानां ( ... ) । "लता प्रतानिनी वीरुत्" इत्यमरः । ऋतु-सम्बन्धिनीम् ... । (ऋतोः) इमां आर्तवीं ऋतुसम्बन्धिनीम् ... । विभूतिं पुष्पाणां समृद्धिं अभिभूय तिरस्कृत्य नृपतेः अजस्य दयितायाः इन्दुमत्याः उर्वोः विशालयोः स्तनयोः ये कोटी चूचुकौ तयोः सुस्थितिं शोभनस्थाने पतितत्वात्प्रशस्तां स्थितिं स्थानमाप प्राप्ता ॥३६॥

समासाः—विशिष्टा भूतिः प्रादि० । मधु च गन्धश्च तौ द्व० । नृणां पतिः ष० । अमराणां स्रक् । शोभना स्थितिः क० । दयितेति टीकायाम् ॥३६॥

विवृतिः—वसन्तः खलु सर्वेषामृतूनां राजा । तस्मिन् सर्वत्र वृक्षाणां लतानां च पुष्पाणां समृद्धिर्दृश्यते । यत्र तत्र वने सुवासो विस्तीर्यते । अस्या दिव्यमालायाः परिमलो रसश्च वसन्तऋतु-सम्बन्धसुवासाद्रसादपि विशिष्टतरो दिव्यत्वात् । सा सर्वाङ्गसुन्दरा मालाऽऽकाशादिन्दुमत्याः पयोधरयोरुपरि पतिता । वीणां त्यक्त्वा सा पुनरजस्य राज्ञो वल्लभाया विशालवक्षोजाग्रभागोपरि प्रशस्तं स्थानं प्राप्तवती ॥३६॥

Derivation:—अभि+भू+ल्यप् (शत्रर्थे)। ऋतोः इमां आर्तवीं ऋतु+अण्+ङीप् । अति+शी+अच् । वि+रुध्+क्विप् । दय्+क्त+टाप् । स्था+क्तिन् ॥३६॥

❀ ❀ ❀

क्षणमात्रसखीं सुजातयोः स्तनयोस्तामवलोक्य विह्वला ।
निमिमील नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी ॥३७॥

[illegible] ॥ ३७ ॥

वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत् ।

ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम् ॥३८॥

अन्वयः—करणोज्झितेन वपुषा निपतन्ती पतिमपि अपातयत्। तैलनिषेकबिन्दुना सह दीपार्चिः मेदिनीं उपैति ननु ॥ ३८ ॥

*Translation:*—Falling down with her body left by th sense-organs she made her lord also fall down. Verily the flame of a lamp comes to the earth along with drops o dripping oil. 38

संजी०—करणं इन्द्रियोपलक्षितं चैतन्यं तेन अथवा करणै इन्द्रियैः उज्झितेन मुक्तेन ।"करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि।" इत्यमरः । वपुषा ( शरीरेण ) निपतन्ती सेन्दुमती पतिं अजम अपातयत्पातयति स्म । तथा हि । निषिच्यते इति निषेकः । तैल निषेकः तैलनिषेकः । क्षरत्तैलमित्यर्थः । तस्य बिन्दुना सह दीपार्चि दीपज्वाला मेदिनीं भुवमुपैति ननु उपैत्येव । ननु अत्र अवधारणे "प्रश्नावधारणाऽनुज्ञाऽनुनयामन्त्रणे ननु ।" इत्यमरः । इन्दुमत्या दीपार्चिः उपमानम् । अजस्य तैलबिन्दुः । तत एव तस्या जीवित समाप्तिः तस्य जीवितशेषश्च सूच्यते ॥ ३८ ॥

समासाः—दीपस्य अर्चिः प० । अन्ये टीकायां द्रष्टव्याः ॥३८

विवृतिः—यावदेव तस्याश्चैतन्यं निर्गतमिन्द्रियाणि च तामत्य

जन्मापदेव सा भूमौ पपात ( अलंगत-अगलत )। तां निजप्रियां मृतां दृष्ट्वाऽजो मूर्च्छितः। मूर्च्छया च सोऽपि तया सह पतितः। अत्र दृष्टान्तः। तैलस्य दीपस्य ज्वाला यदा नश्यति तदा तस्याः पतनेन सह तद्गततैलबिन्दुरपि भूमौ स्रंसते। दीपो निर्वाति किन्तु तैलं पतत्येव न च नश्यति। तथैवेन्दुमती मृताऽजस्य च केवलं संज्ञा नष्टा। अचिरेण स पुनरुज्जीवितः ॥ ३८ ॥

Derivation:—वप्+उसि। उप्यन्ते देहान्तर भोगसाधन-बीजभूतानि कर्माण्यत्रेति वपुः। कृ+ल्युट् (अन)। क्रियतेऽनेनेति करणम्। उज्झ्+क्त। नि+पत+शतृ+ङीप्। तिल+अण् विकारार्थे। नि+सिच्+घञ्। दीप्+क। अद्+इसि। भेद+अनुन+इनि+ङीप्=मधुकैटभभेदः अस्ति अस्याः कारणत्वेन ॥ ३८ ॥

c c c

उभयोरपि पार्श्ववर्तिनां तुमुलेनार्तरवेण वेजिताः।
विहगाः कमलाकरालयाः समदुःखा इव तत्र चुक्रुशुः ॥३९॥

अन्वयः—उभयोः अपि पार्श्ववर्तिनां तुमुलेन आर्तरवेण वेजिताः कमलाकरालयाः विहगाः तत्र समदुःखा इव चुक्रुशुः ॥३९॥

*Translation:*—Frightened at the tumultuous shrieks of grief of the attendants even of them both, the birds living in the beds of lotuses began to cry there as if they were equally grieved. 39

संजी०—उभयोः द्वयोः दम्पत्योः पार्श्ववर्तिनां परिजनानां तुमुलेन संकुलेन आर्तरवेण करुणस्वनेन वेजिताः भीताः कमलाकरालयाः सरःस्थिताः विहगाः हंसादयोऽपि तत्र उपवने समदुःखाः इव

तदा पार्श्ववर्तिनी समानशोकाः [illegible] कुलायाः क्रोशन्ति स्म ॥३९॥

समासाः—पार्श्वे वर्तन्ते इति पार्श्व० । आलीनां गणः ष० । कमलानां आकरः ष० । स आलयः येषां ते बहु० । समं दुःखं येषां ते ब० ॥३९॥

विवृतिः—राजा अजः तस्य वेलाकुसुमनाशेन दासाः संवकाल तत्रागताः । ते सर्वेऽपि तदवलोक्य दुःखाऽतीव शोकमग्ना रुदितं चक्रुः । तदाकर्ण्य तत्रस्थाः सर्वे जलचराः हंसादयोऽखिलाः स्थलचराः शुकसारिकाप्रभृतयः पक्षिणोऽपि तदेव दुःखमनुभूयेव क्रन्दनं विदधुः ॥३९॥

Derivation:—पर्शु+अण् समूहार्थे । पार्श्व+वृत्+णिनिः । तु+मुलक् । आ+अल+क्त । रु+अप्—रवः । विज्+णिच्+क्त । विहायसा गच्छन्ति इति विहायस्+गम+ड । आलीयते अत्र इति आ+ली+अच् । आकुर्वन्ति व्यवहारमत्रेति आकराः—आ+कृ+घ ॥३९॥

ɷ ɷ ɷ

नृपतेर्व्यजनादिभिस्तमो नुनुदे सा तु तथैव संस्थिता ।
प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते ॥४०॥

अन्वयः—नृपतेः तमः व्यजनादिभिः नुनुदे । सा तु तथैव संस्थिता । हि प्रतिकारविधानं आयुषः शेषे सति फलाय कल्पते ॥४०॥

*Translation:*—The swoon of the lord of men—king Aja- dispelled by fanning and the like, but she remained i very condition (of lifelessness); for the use of a remed

produces some effect only when there is a residue of life. ४०

संजी०—नृपतेः अजस्य तमः अज्ञानम् । मूर्च्छेत्यर्थः । व्यजनादिभिः साधनैः नुनुदे अपसारितम् । आदिशब्देन जलसेककर्पूरलेपनादयो गृह्यन्ते । सा तु इन्दुमती तथैव संस्थिता मृता । तथाहि प्रतिकारस्य चिकित्सायाः विधानं करणं आयुषः जीवितकालस्य शेषे सति विद्यमाने । "आयुर्जीवितकालो ना" । इत्यमरः । फलाय सिद्धये कल्पते समर्थं भवति । नान्यथा । नृपतेरायुःशेषसद्भावात्प्रतीकारस्य साफल्यम् । तस्यास्तु तदभावाद्वैफल्यमित्यर्थः ॥४०॥

समासाः—व्यजनं आदिः येषां ते व० ॥४०॥

विवृतिः—यावदेवाजो राजा मूर्च्छां प्राप्तस्तावदेव सर्वैः परिजनैस्तस्य मोहस्य निवारणार्थं व्यजनं वारिणः सेचनं कर्पूरादिचूर्णस्य लेप इत्यादिसाधनानि प्रयुक्तानि । तेन कालेन स संज्ञां प्राप्तवान् । इन्दुमती तु मृतैव । यदि जीवितकलाऽस्ति चिकित्सा सफला भवति मृतस्य कोऽप्युपायो नास्ति ॥४०॥

Derivation:—वि+अज्+ल्युट् । स्था+क्त । प्रति+कृ+घञ् =प्रतिकारः प्रतीकारो वा । वि+धा+ल्युट् । इ+णिच्+उसि=आयुस् शिष्+घञ् ॥४०॥

प्रतियोजयितव्यवल्लकीसमवस्थामथ सत्त्वविप्लवात् ।
स निनाय नितान्तवत्सलः परिगृह्योचितमङ्कमङ्गनाम् ॥४१॥

अन्वयः—अथ सत्त्वविप्लवात् प्रतियोजयितव्यवल्लकी

समवस्थां अङ्गनां नितान्तवत्सलः सः परिगृह्य उचितं अङ्कं निनाय ॥४१॥

*Translation:*—Then the king, who loved his wife most, having held her up whose condition, through loss of life, was like that of a lute which is to be stringed, took her on his lap to which she was accustomed, familiar. 41

संजो०—अथ सत्वस्य चैतन्यस्य विप्लवात् विनाशात् हेतोः। "द्रव्यासुव्यवसायेषु सत्त्वम्" । इत्यमरः । प्रतियोजयितव्या तन्त्रीभिः योजनीया । नतु योजिततन्त्री इत्यर्थः । [ प्र० अवतंसनान्तरं पुनः सज्जीकरणयोग्या ] । या वल्लकी वीणा तस्याः समावस्था दशा यस्यास्ताम् अङ्गनां वनितां नितान्तवत्सलः अतिप्रेमवान् सः अजः परिगृह्य हस्ताभ्यां गृहीत्वा उचितं परिचितं अङ्कं उत्सङ्गं निनाय नीतवान् । वल्लकीपक्षे तु सत्वं तन्त्रीणां अवष्टम्भकः शलाकाविशेषः ॥४१॥

समासाः—नितान्तं वत्सलः स हसुपेतिस० इतरे टीकायाम्॥४१॥

विवृतिः—यथा कस्याश्चिद्वीणायाः शलाकायां नष्टायां सत्यां तुम्बाफलतन्त्रीगुणादिशरीरसद्भावादपि सा निरुपयोगिनी भवति तथैव जीविते गते राज्ञ्याः कलेवरं शवरूपमासीत् । तां मृतां पत्नीं नितरां प्रेमवानजो निजहस्ताभ्यां समुत्थाप्य स्वस्योत्सङ्गे धारितवान् । यस्मिन्नुत्सङ्गेऽग्य यावत् जीवितसमये सा निजशिरः स्थापयामास तस्मिन्नेवाधुना तस्याः मृतशरीरमासीदिति चात्यन्तदुःखदायकं दृश्यं खलु ॥४१॥

ivation:—प्रति+युज्+णिच्+तव्यन्। सम्+अव+स्था+
[illegible]+शतृ=सन्+त्व । वि+प्लु+अप्। नि+तम्+क्त ।

Derivation:—नि+सद्+क्त(न)+टाप्=निषण्णा । अप+इ+अच्=अपायः । वि+भिद्+क्त=विभिन्न । भृ+शतृ=बिभ्रत्। आविलयति तृणानि दृष्टिमिति आ+विल्+क+टाप्=आविला। चन्द्रं आह्लादं मिमीते इति चन्द्र+मा+असिच् ॥४२॥

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥४३॥

अन्वयः—सः सहजां अपि धीरतां अपहाय बाष्पगद्गदं विललाप । अभितप्तं अजः अपि मार्दवं भजते । शरीरिषु कथा एव का ॥४३॥

*Translation:*—Having given up his natural firmness he began to lament in accents indirect through the flow of tears. Even iron when heated gets softness—becomes soft; what need be said of embodied beings? 43

संजी०—सः अजः सहजां स्वाभाविकीं अपि धीरतां धैर्यं अपहाय विप्रकीर्य बाष्पेण कण्ठगतेन (अश्रुणा) गद्गदं विशीर्णाक्षरं यथा तथा ध्वनिमात्रानुकारिगद्गदशब्दैः विललाप परिदेवितवान्। "विलापः परिदेवनम् ।" इत्यमरः । धैर्यापहारे दुःखातिशयः कारणं इत्याशयेन आह । अभितप्तं अग्निना सन्तप्तं अयः लोहं अचेतनं अपि मार्दवं मृदुत्वं अधैर्यं च भजते प्राप्नोति । शरीरिषु देहिषु अभिसन्तप्तेषु इति शेषः । विषये कथा एव वादः एव सन्दिग्धार्थनिर्णयरूपा का किंरूपा इति आक्षेपः । सन्दिग्धे न्यायः प्रवर्तते हि। प्रतप्तेषु अधैर्यप्राप्तिसन्देहो नास्त्येव । अनुक्तसिद्धमित्यर्थः ॥४३॥

समासा:—बाष्पेण गद्गदं तृ० । सह जाता सुपेति स० । अभितः तप्तम् प्रादि० ॥४३॥

विवृति:—अजो राजा निसर्गत एव स्थिर आसीत् । तथापि तेन दुःखेन तस्य मनसोऽविकारत्वं नष्टम् । स्थैर्यं त्यक्त्वा साधारण इव स विमुक्तकण्ठं रुरोद । जडं लोहमपि वह्निना तप्तं सद् द्रवोरूपं भवति । काठिन्यं त्यक्त्वा कोमलं भवति लोहधातुः । विपद्दग्धो मानवः सुकोमलो भवतीति किमुवक्तव्यम् ॥४३॥

Derivation:—सह+जन्+ड+टाप् । धी+क्रन् or धियं राति इति धी+रा+क+तल्+टाप् । अभि+तप+क्त । मृदोः भावः मार्दवम् । मृदु+अण् । शरीर+इनिः ॥४३॥

❧ ❧ ❧

कुसुमान्यपि गात्रसङ्गमात्प्रभवन्त्यायुरपोहितुं यदि ।

न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥४४॥

अन्वय:—कुसुमानि अपि गात्रसङ्गमात् आयुः अपोहितुं प्रभवन्ति यदि । हन्त प्रहरिष्यतः विधेः अन्यत् किमिव साधनं न भविष्यति ॥४४॥

*Translation:*—If even flowers by coming in contact with the (human) body have the power of taking away life, then, alas! what else, indeed, will not be the means (weapon) of Fate bent on striking? 44

संजी०—कुसुमानि पुष्पाणि अपि । अपिशब्दो नितान्तमार्दवद्योतनार्थः । गात्रसंगमात् देहसंसर्गात् । न तीव्राभिघातादिति भावः । आयुः (जीवितं) अपोहितुं अपहर्तुं प्रभवन्ति समर्थानि भवन्ति

संजी०—अथवा प्रजान्तं प्रजान्तकः यमः मृदु कोमलं वस्तु मृदुनैव वस्तुना हिंसितुं हन्तुं आत्मने उपक्रमते । अत्र अर्थे हिमसेकेन तुषारनिष्यन्देन विपत्तिः मृत्युः यस्याः सा नलिनी पद्मिनी पूर्वे प्रथमं निदर्शनं उदाहरणं मे (मम) मता सम्मता । द्वितीयं निदर्शनं पुष्पमृत्युः इन्दुमतीति भावः ॥४५॥

समासः—हिमस्य सेकः ष० । पूर्वं निदर्शनं कर्म० । प्रजानां अन्तकः ष० ॥४५॥

विवृतिः—शोकतमोऽजो विलपनसमये पक्षान्तरं विचारयति मम प्रिया सुकुमारशरीरा । सुकुमारं मानवं मारयितुं यमः सुकुमारमेव शस्त्रं योजयतीति भवेत् । को वा जानाति तस्य हृदयम् । कोमलां कमलिनीं ध्वंसयितुं स कोमलस्य तुहिनवर्षस्यैवोपयोगं करोति । पद्मिनीविनाशः प्रथमं प्रियामृत्युश्च द्वितीयमुदाहरणमस्य साधारणनियमस्य ॥४५॥

Derivation:—वस्+तुन=वस्तु । हिंस्+तुमुन् । प्र+जन+ड+टाप्=प्रजा । अन्तं करोति इति अन्तकः । अन्त+णिच्+ण्वुल् । सिच्+घञ्=सेकः । वि+पद्+क्तिन् । नलाः सन्ति अस्याः सा नलिनी इनिप्रत्ययः । नि+दृश्+ल्युट् । मन्+क्त+टाप्=मता ॥४५॥

ꟼ ꟼ ꟼ

स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥४६॥

अन्वयः—इयं स्रग् जीवितापहा यदि हृदये निहिता मां किं न हन्ति । ईश्वरेच्छया क्वचिद्विषमपि अमृतं भवेत् अमृतं वा विषं भवेत् ॥४६॥

lightning—by the Creator, since by it the tree was not felled down while the creeper resorting to its branches has been consumed. 47

संजी०—अथ वा मम भाग्यस्य विप्लवात् विपर्ययात् निमित्तात् एषः । स्रगित्यर्थः । विधेयप्राधान्यात् पुंल्लिङ्गनिर्देशः । वेधसा विधात्रा । कर्त्रा । अशनिः वैद्युतः अग्निः कल्पितः । "दम्भोलिरशनिर्द्वयोः ।" इत्यमरः । अपूर्वः कृतः इत्यभिसन्धिः । अपूर्वत्वमेव स्पष्टयति । यत् यस्मात्कारणात् अनेन पुरोवर्तिना अपि पुष्पाशनिना प्रसिद्धाशनिना इव तरुः तरुस्थानीयः स्वयमेव न पातितः न प्रध्वंसितः किन्तु तस्य तरोः विटपाश्रिता शाखाधारा लता वल्ली क्षपिता नाशिता । तरुशब्देन आत्मा ध्वन्यते लताशब्देन इन्दुमती । लोके प्रसिद्धोऽशनिः तरुं लतां च क्षपयति । अयं च लतामेव न तरुमित्यनेन प्रकारेण अस्य अपूर्वत्वं इति अभिप्रायः ॥४७॥

समासः—विटपः आश्रयः यस्याः बहु० ॥४७॥

विवृतिः—अथ वाऽहमेव दुर्भाग्यः । तस्माद् ब्रह्मदेवो मम भार्यां मारितवान् । दैवेनायं तडिद्वह्निरिन्दुमतीं दग्धवान् । वज्रं पातितं तस्याम् । इयं पुष्पमाला वज्ररूपं गृहीत्वा ममोपरि पतिता । किन्त्वद्भुतमेतद्यथा विद्युदियं वृक्षोपरि पतित्वा वृक्षं त्यक्त्वा तदाधारेण वसन्तीं वल्लीमेव नाशितवती । अनोकहस्य अद्भुत एव ॥४७॥

Derivation:—भज्+ण्यत्=भाग्यम् । वि+प्लु+अप् । अश्+अनिः—अश्नुते संहन्ति इत्यशनिः । क्लृप्+क्त । वि+धा+असुन्=वेधस् । पत्+णिच्+क्त । क्षि+पुक् or णिच्+क्त+टाप्=क्षपिता । आ+श्रि+अच्=आश्रयः ॥४७॥

ध्रुवमस्मि शठः शुचिस्मिते विदितः कैतववत्सलस्तव ।
परलोकमसंनिवृत्तये यदनापृच्छ्य गतासि मामितः ॥४९॥

अन्वयः—हे शुचिस्मिते कैतववत्सलः शठः ध्रुवं तव विदितः अस्मि । यद् मां अनापृच्छ्य इतः परलोकं असंनिवृत्तये गता असि ॥४९॥

*Translation*:—O lady of pure smiles, I am certainly known to you as a rogue with insincere love in as much as you have departed without bidding me farewell from this world to the next never to come back again. 49

संजी०—हे शुचिस्मिते धवलहसिते शठः गूढविप्रियकारी । ( शठः । प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम् ) । कैतवेन कपटेन वत्सलः कैतवस्निग्धः इति ध्रुवं सत्यम् तव विदितः त्वया विज्ञातः अस्मि । "मतिबुद्धि"—इत्यादिना कर्तरि क्तः । "क्तस्य च वर्तमाने" इति कर्तरि षष्ठी । कुतः । यत् यस्मात् मां अनापृच्छ्य अनामन्त्र्य इतः अस्माल्लोकात् परलोकं असंनिवृत्तये अपुनरावृत्तये गता असि ॥४९॥

समासः—शुचि स्मितं यस्याः बहु० । परः लोकः कर्म० । न सं० असंनि० नञ् । न आपृच्छ्य नञ् ॥४९॥

विवृतिः—कीदृशं शुभ्रं पुण्यं तव स्मितमासीत् । तथापि साम्प्रतं प्रिये किं न तद् दृश्यते । किमर्थं न हससि । किं मया किञ्चिद्विप्रियं कृतम् । अपि ममानुरागोऽसत्यः । एकमपि कपटं मया कृतं किं त्वया ज्ञायते । न हि । तर्हि कथं ममानुज्ञामगृहीत्वैव मामत्रोज्झित्वा त्वमेकाकिन्येव स्वर्गं याता । हा दैव नागच्छति मम वल्लभा पुनरत्र ॥४९॥

Derivation:—ध्रु+अन् ध्रुवम्। शद्+अन्। श्रुत्+क्तिन्। स्मि+क्त–भावे। सिद्+क्त। कितेन यानि कितवः तस्य भावः अण्–कैतवम्। वत्स+लच्। सम+नि+वृत्+क्तिन्। आ+पृच्छ्+ल्यप् गम्+क्त+टाप् ॥४९॥

* * *

दयितां यदि तावदन्वगाद्विनिवृत्तं किमिदं तया विना।
सहतां हतजीवितं मम प्रबलामात्मकृतेन वेदनाम् ॥५०॥

अन्वयः—इदं मम हतजीवितं तावद् दयितां अन्वगात् यदि तया विना किं विनिवृत्तम्। आत्मकृतेन प्रबलां वेदनां सहताम् ॥५०॥

*Translation:*—If this wretched life of mine followed my beloved first, why did it return (then) without her? Let it suffer the torments, overwhelming on account of its own evil deeds. 50

संजीविनी:—इदं मम हतजीवितं कुत्सितं जीवितं तावत् दयितां इन्दुमतीं अन्वगात् अन्वगच्छत् यदि। अन्वगादेव ... । पूर्वमूर्च्छितत्वादिति भावः तर्हि तया विना किं किमर्थं विनिवृत्तं प्रत्यागतम्। प्रत्यागमनं न युक्तमित्यर्थः ... एव आत्मकृतेन स्वदुश्चेष्टितेन निवृत्तिरूपेण प्रबलां ... वेदनां दुःखं सहतां क्षमताम्। स्वयंकृतापराधेषु सहिष्णुतैव ... मिति भावः ॥५०॥

समासाः—हतं जीवितम् कर्म०। प्रकृष्टं बलं यस्याः बहु० आत्मना कृतं तृ० त० ॥५०॥

क्त-भावे। तुद्-इनन। अद्-क्तिन-अत्रिः। ओषः (तेजः) धीयतेऽत्र इति ओष-धा-कि=ओषधिः ॥५४॥

इदमुच्छ्वसितालकं मुखं तव विश्रान्तकथं दुनोति माम्।
निशि सुप्तमिवैकपङ्कजं विरताभ्यन्तरषट्पदस्वनम् ॥५५॥

अन्वयः—इदं उच्छ्वसितालकं विश्रान्तकथं तव मुखं मां दुनोति निशि सुप्तं विरताभ्यन्तरषट्पदस्वनं एकपङ्कजमिव ॥ ५५ ॥

*Translation:*—This face of yours with curly hair waving and with the speech altogether ceased pains me like a solitary lotus closed at night with the humming of the bees in the interior suspended. 55

संजी०—इदं उच्छ्वसितालकं चलितचूर्णकुन्तलं विश्रान्तकथं विगत (निवृत्ति) संलापं तव मुखं निशि रात्रौ सुप्तं निमीलितं विरतः अभ्यन्तराणां अन्तर्वर्तिनां षट्पदानां (भ्रमराणां) स्वनः (नादः) यत्र तत्। निःशब्दभृङ्गमित्यर्थः। एकपङ्कजं अद्वितीयं पद्ममिव। मां दुनोति परितापयति। निशीत्यनेनान्धकारं लक्ष्यते। तदेवोच्छ्वसितानुमानमित्यूहनीयम् ॥५५॥

समासाः—उच्छ्वसिताः अलकाः यस्मिन् बहु०। विश्रान्ता कथा यस्मिन् बहु०। एकं पंकजं कर्म०। पङ्कात् जातं उप०। अभ्यन्तराः षट्पदाः कर्म०। षट् पदानि येषां बहु०। तेषां स्वनः ष०। विरतः अभ्य० यस्य बहु० ॥५५॥

विवृतिः—रात्रौ कमलानि निमीलन्ति। सन्ध्यासमये तदुपरि गुञ्जारवेण भ्रमन्तो भृङ्गा तेषु निरुध्यन्ते। ततस्तेषां रवो विरमति। ईदृक् कमलं द्रष्टुर्मनः पीडयति। तथैव यद्यपि तव वदनोपरि ललाटे चूर्णकुन्तला वायुनेतस्ततश्चलन्ति तेन च तत्सुन्दरं दृश्यते

तथापि मृत्युना जीविते नीते सति तस्य आपणशक्तिर्गता। हा हन्तुमति मम हृदयं दारुणे नयान्तेन ॥५५॥

Derivation:—उत्+श्वस्+क्त। अलति भूषयति मुखमिति अल्+क्वुन्=अलकः। वि+श्रम्+क्त। कथ्+अ=कथा। स्वप्+क्त। पङ्क+जन+जन+ड। वि+रम्+क्त। पद्+अच्=पदम्। तन्+अप् ॥५५॥

शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम्।
इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः ॥५६॥

अन्वयः—शर्वरी शशिनं पुनः एति। द्वन्द्वचरं पतत्रिणं दयिता। इति तौ विरहान्तरक्षमौ। अत्यन्तगता त्वं कथं न मां दहेः ॥५६॥

*Translation:*—The night again goes back to the moon and the (chakravāka) mate comes to her bird-consort that moves about in pair; thus they two are able to endure the period of separation; but how will you, gone for ever, (not to return any more), not burn me? 56

संजी०—शर्वरी रात्रिः शशिनं चन्द्रं पुनरेति प्राप्नोति। द्वन्द्वीभूय चरतीति द्वन्द्वचरः। तं पतत्रिणं चक्रवाकं दयिता चक्रवाकी पुनरेति। इति हेतोः तौ चन्द्रचक्रवाकौ विरहान्तराणि विरहभेदान् क्षमेते इति (विरहावधिसहौ)। "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये"। इत्यमरः। अत्यन्तगता अपुनरागमनाय (पुनरावृत्तिरहिता) त्वं तु कथं न मां दहेः न सन्तापयेः। अपि तु दहेरेवेत्यर्थः ॥५६॥

समासाः—छन्देन चरति उप० । विरहस्य अन्तरं प० । तत् क्षमेते उप० । अतिक्रान्तः अन्तं सीमां इति अत्यन्तम् गति० । अत्यन्तं गता सुप् सुप्० ॥५६॥

विवृतिः—प्रातःकाले रजनिश्चन्द्रमसं त्यक्त्वा गच्छति रात्रौ च चक्रवाको निजभर्तारं त्यजति तथापि यथासंख्यं सायंकाले सूर्योदये च ते भूयोऽपि पतिसमीपमागच्छतः । तस्मादेतयोर्युगमयोर्वियोगः शाश्वतो नास्ति । तेन च पुनरावर्तनाशया निशापतिश्च रथाङ्गनामा च तं विश्लेषावसरं सोढुं शक्तौ । न च तथा मम । त्वं न कदाप्यागच्छसीति कल्पना मां भस्मसात्करोति ॥५६॥

Derivation:—शश+इनिः । शॄ+वनिप्+ङीप् (वनोरच)= शर्वरी । द्वि+द्वि=द्वन्द्वं निपातनात् । चर्+ट । पत्+शतृ-पतन्तं त्रायते इति-त्रै+क=पतत्रः+इनिः मतुवर्थे । क्षम्+अच् ॥५६॥

नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् ।
तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोहणम् ॥५७॥

अन्वयः—नवपल्लवसंस्तरे अपि अर्पितं मृदु ते यत् अङ्गं दूयेत हे वामोरु तत् इदं चिताधिरोहणं कथं विषहिष्यते वद ॥५७॥

*Translation:*—O lady with charming thighs, that tender body of yours, which when placed even on a bed of new, fresh sprouts, would be pained, tell me (then) how can the same body now bear ascending the funeral pyre? 57

संजी०—नवपल्लवसंस्तरे नूतनप्रवालास्तरणे अपि अर्पितं स्थापितं मृदु (कोमलं) ते तव यद् अङ्गं शरीरं दूयेत परितप्तं भवेत् । वामौ सुन्दरौ ऊरू यस्याःसा हे वामोरु । "वामं स्या[illegible] सव्ये" । इति केशवः । "संहितशफलक्षण"—इत्यादिनो[illegible]

नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् । तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोहणम् ॥५७॥ — [the verse above is not printed; see below]

तदिदमङ्गं चितायाः काष्ठसंचयस्याधिरोहणं कथं विषहिष्यते वद ॥५७॥

समासः—नवाः पल्लवा कर्म० तेषां संस्तरः ष० । वामोरुः बहु० ॥५७॥

विवृतिः—प्रिये इदं तव गात्रमतिसुकुमारम् । नूतनपेलवप्ररोहनिर्मिते शयने शयिताऽपि त्वं खेदमनुभवेः । स्निग्धकोमलमपि तत्तव कठोरम् । सुन्दरि ! हा दैव ! साम्प्रतं तव शरीरं दहनाय कठिनकाष्ठखण्डानां समूहे स्थाप्येत । कथ तत्त्वं सहसे ॥५७॥

Derivation:—नु+अप्=नवः । पल्यते—पल्+क्विप्=पल्+लू+अप्=पल्लवः । सम्+स्तृ+अप्=ऋ+णिच्+क्त=अर्पित । चि+क्त+टाप्=चिता । अधि+रुह्+ल्युट्=अधिरोहणम् ॥५७॥

❧ ❧ ❧

इयमप्रतिबोधशायिनीं रशना त्वां प्रथमा रहःसखी ।
गतिविभ्रमसादनीरवा न शुचा नानुमृतेव लक्ष्यते ॥५८॥

अन्वयः—इयं प्रथमा रहःसखी गतिविभ्रमसादनीरवा रशना अप्रतिबोधशायिनीं त्वां अनु शुचा मृता इव न लक्ष्यते न ॥५८॥

*Translation:*—This girdle, your first [illegible] in privacy, noiseless (now) on account of the cessation of your sportive gait, does not seem through grief, not to have died, as it were, after you who are sleeping not to awake again. 58

संजी०—इयं प्रथमा आद्या [illegible]

अन्वयः—अन्यभृतासु कलं भाषितं कलहंसीषु मदालसं गतं पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः अमी गुणाः त्रिदिवोत्सुकया अपि त्वया मां अवेक्ष्य ननु निहिताः तव विरहे गुरुव्यथं मे हृदयं अवलम्बितुं तु न क्षमाः ॥५९-६०॥

*Translation*:—Sweet notes in the cuckoos, the gait slow through ardent passion (of youth) in the female swans, tremulous glances in the hinds and amorous sports in the creepers shaken by the wind:—these qualities have been indeed, deposited by you, out of regard for me, though you were eager to go to heaven; but they are not able to support my heart, full of heavy grief, in your separation. 59-60

संजी०—(द्वाभ्यां युग्ममिति प्रोक्तम्) युग्मेनाह। उभयोः एकान्वयः। अन्यभृतासु कोकिलासु कलं मधुरं भाषितं भाषणम्। कलहंसीषु विशिष्टहंसीषु मदालसं मन्थरं गतं गमनम् पृषतीषु हरिणीषु विलोलमीक्षितं चञ्चला दृष्टिः। पवनेन वायुना आधूतलतासु ईषत्कम्पितलतासु विभ्रमाः विलासाः इत्यमी पूर्वोक्ताः कलभाषणादयो गुणाः एषु कोकिलादिस्थानेषु इति शेषः। त्रिदिवोत्सुकया अपि स्वर्गं प्रति प्रस्थितयाऽपि त्वया मामवेक्ष्य विरहासमं विचार्य सत्यं निहिताः स्थापिताः। मत्प्राणधारणोपायतया इत्यर्थः। तव विरहे गुरुव्यथं अतिदुःखं मे हृदयं मनः अवलम्बितुं धारयितुं तु न क्षमाः न शक्ताः। ते तु त्वत्सङ्गमे एव सुखकारिणः। नान्यथा। प्रत्युत प्राणानपहरन्तीति भावः ॥५९-६०॥

समासाः—अन्यैः भृताः तृ०। कलाः हंस्यः कर्म०। मदेन अलसम् तृ०। आधूताः लताः क०। त्रिदिवे त्रिदिवेन वा उत्सुका दृ० स० स०। गुरुः व्यथा यस्य व० ॥५९-६०॥

It is improper for you to depart (that you should go) without having performed their auspicious marriage-ceremony. 61

संजी०—ननु हे प्रिये सहकारः चूतविशेषः फलिनी प्रियङ्गुलता च इमौ त्वया मिथुनं ( जायापतियुगलं ) परिकल्पितं मिथुनत्वेन अभ्यमानि समर्थितम् । ( अयं च इमं च इमौ "पुमान् स्त्रिया" ) । अनयोः फलिनी सहकारयोः विवाहसत्क्रियां विवाहमङ्गलं अविधाय अकृत्वा गम्यते ( स्वर्गं ) इति असाम्प्रतमयुक्तम् मातृहीनानां न किंचित्सुखमस्तीति भावः ॥६१॥

समासाः—न विधाय नञ् । विवाहस्य विवाहः एव वा सत्क्रिया ष० or कर्म० । सती क्रिया कर्म० । न साम्प्रतम् नञ् ॥६१॥

विवृतिः—आम्रवृक्षं तथा च प्रियङ्गुवल्लीं तरुणौ विलोक्य त्वं निश्चितवती यथाऽनयोः परिणयसंस्कारेण सङ्गतिः कर्त्तव्येति । न च त्वया तयो पाणिपीडनविधिरद्य यावत् कृतः । अपि नैतदन्याय्यं तवेदानीमेव प्रस्थानम् । तयोः कृते तावत्पुनरप्युत्तिष्ठ ॥६१॥

Derivation:—मिथ+इनन् । परि+क्लृप्+क्त । सह युगपत् किरति सौरभमिति सहकारः । कृ+अण् । फल+इनि+ङीप् । वि+धा+ल्यप् । वि+वह्+घञ् । अस्+शतृ=सत् । कृ+श=क्रिया ॥६१॥

कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति ।
अलकाभरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम् ॥६२॥

अन्वयः—त्वया कृतदोहदः अयं अशोकः यत्कुसुममुदीरयिष्यति तत्तव अलकाभरणं कथं नु निवापमाल्यतां नेष्यामि ॥६२॥

*Translation* —The flowers which this Asoka tree, whose longing before budding was gratified by you, would put forth, would have been an ornament for your hair (were you living): how shall I, my dear, now use them for a garland to be offered at your funeral? 62

संजी०—वृक्षादिपोषकं दोहदम्। त्वया कृतं दोहदं पादताडन रूपं यस्य सः अयमशोकः यत्कुसुममुदीरयिष्यति प्रसविष्यते तवालकानां (केशानां) आभरणं आभरणभूतं तत्कुसुमं कथं नु केन प्रकारेण निवापस्य माल्यतां दाहाञ्जलेरर्ध्यतां नेष्यामि। "निवापः पितृदानं स्यात्।" इत्यमरः ॥६२॥

समासाः—टीकायां द्रष्टव्याः ॥६२॥

विवृतिः—पश्य तमशोकवृक्षम्। पुष्पोद्गमात्प्राक् तस्येच्छा-ऽऽसीद्यथा युवत्या महिष्या निजचरणेन मम स्पर्शः कर्तव्य इति। सा च त्वया पूरिता। साम्प्रतं स प्रसूनानि धारयति। ममाभिला-पस्तावदयं यथा तैस्तव केशकलापो भूषणीय इति। हा हा तेषां माला खलु मयाधुना प्रेतक्रियायां दातव्या ॥६२॥

Derivation:—दोहं आकर्षं ददाति इति दोहदः। दुह्+घञ्+दा+क। आ+भृ+ल्युट्=आभरणम्। न्युप्यते इति निवापः। नि+वप्+घञ्। मालायै हितं माल्यम्। यत् or स्वार्थेष्यञ्+तल्+टाप् ॥६२॥

✿ ✿ ✿

स्मरतेव सशब्दनूपुरं चरणानुग्रहमन्यदुर्लभम्।
अमुना कुसुमाश्रुवर्षिणा त्वमशोकेन सुगात्रि शोच्यसे ॥६३॥

अन्वयः—अन्यदुर्लभं सशब्दनूपुरं चरणानुग्रहं स्मरतेव कुसुमाश्रुवर्षिणा अमुना अशोकेन सुगात्रि शोच्यसे ॥६३॥

*Translation:*—O dear of lovely form, you are mourned by this Aśoka tree shedding tears in the form of flowers remembering, as it were, the favour of your foot, the anklet in which was jingling, and which was difficult to be obtained by any other tree. 63

संजी०—अन्यदुर्लभम्। किन्तु स्मर्तव्यमेवेत्यर्थः। सशब्दं ध्वनियुक्तं नूपुरं मञ्जीरं यस्य तं चरणेन अनुग्रहं पादेन (प्रसादं) ताडनरूपम्। त्वदीयमिति भावः। स्मरतेव चिन्तयतेव कुसुमान्येव अश्रूणि तद्वर्षिणा पुष्पवाष्पमुचा अमुना पुरोवर्तिना पूर्वोक्तादन्येन अशोकेन। हे सुगात्रि। "अङ्गगात्रकण्ठेभ्यश्च" इति वक्तव्यात् ङीप्। त्वं शोच्यसे। उत्तमाङ्गे तव चरणताडनेन तरुपोपश्लेहादानेन श्लेषे स्पष्टीकृतः ॥६३॥

समासाः—शब्देन सहितं व०। अन्येन दुर्लभम् तृ०। कुसुमान्येव अश्रूणि रूपक कर्म०। तानि वर्षितुं शीलमस्य उप०। शोभनानि गात्राणि यस्याः बहु० ( सुगात्रा वा ) ॥६३॥

विवृतिः—हे चार्वङ्गि प्रिये अयं पुरो दृश्यमानोऽन्योऽशोकवृक्षस्तव पादताडनप्रसादादेवप्रफुल्लः। तस्य मनसि तव सुनादमञ्जीरभूषितः पाद आगत इव। तस्य ताडनमधुना न केनापि वृक्षेण प्राप्यत इति चिन्तयित्वा स रोदितीव। तस्य नयनजलबिन्दवः पुष्परूपेण पतन्तीति मन्ये। हा! वृक्षा अपि त्वत्कृते दुःखिताः॥६३॥

Derivation:—स्मृ+शतृ (अत्)=स्मरत्। चर्+ल्युट=चरणः चरणं वा। अनु+ग्रह+अप्। दुःखेनलब्धु शक्यम्। दुर्+लभ्+खल्। कुसु०+वृष्+णिनिः ॥६३॥

Derivation:—निः+श्वस्+क्त। अनु+कृ+णिनि। चि+क्त। सम्+आप्+ल्यप्। वि+लस्+घञ्=विलासः। कुत्सितो नरःकिन्नरः। अश्वमुखो नरदेहः, नरमुखोऽश्वदेहश्च देवानां गायकः। नॄ or नृ+अच् नरः ॥६४॥

समदुःखसुखः सखीजनः प्रतिपच्चन्द्रनिभोऽयमात्मजः ।
अहमेकरसस्तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः ॥६५॥

अन्वयः—अयं सखीजनः समदुःखसुखः आत्मजः प्रतिपच्चन्द्रनिभः अहमेकरसः तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः ॥६५॥

*Translation:*—These your friends are your partners in your joys and sorrows; this your son resembles the moon of the first day of a month (young and growing gradually); I am one loving you exclusively; and yet your behaviour—your action—is cruel on account of your resolve. 65

संजी०—अयं सखीजनः समदुःखसुखः। त्वद्दुःखेन दुःखी त्वत्सुखेन सुखीत्यर्थः। अयं आत्मजः बालः प्रतिपच्चन्द्रनिभः प्रतिपदि शुक्लपक्षे क्षीणचन्द्रः तन्निभः तत्सदृशः। दर्शनीयः वर्धिष्णुश्चेत्यर्थः। प्रतिपच्छब्देन द्वितीया लक्ष्यते प्रतिपदि चन्द्रस्यादर्शनात्। अहं एकरसः अभिन्नरागः समान प्रेमा इत्यर्थः। "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः। तथापि जीवितसामग्रीसत्त्वे अपि इत्यर्थः। ते तव व्यवसायः (मरणोद्यमः) अस्मत्परित्यागरूपो व्यापारः प्रतिपत्त्या निश्चयेन आकस्मिकगमनव्यञ्जितेन (दुराग्रहेण) निष्ठुरः क्रूरः। "प्रतिपत्तिः पदप्राप्तौ

प्रवृत्तौ गौरवेऽपि च। प्रागल्भ्ये च प्रवोधे च" इति विश्वः। "स्मर्तुं न शक्यः किमुताधिकर्तुं" इति भावः ॥६५॥

समासाः—सखीनां जनः ष० or सख्यःएव जनः कर्म०। दुःखं च सुखं च दुःखसुखे द्वन्द्वः। समे दुःख० यस्य बहु०। प्रतिपदि चन्द्रः स०। तेन सदृशः नित्य०। आत्मनः जातः उप०। एकः रसः यस्य बहु० ॥६५॥

विवृत्तिः—एताः सर्वास्तव वयस्याः प्रणयिन्यः सहचर्यस्तवेष्टानिष्टयोः सहभोगिन्यः। तव शोके तासां शोकस्तवानन्दे च तासामानन्दः। एष आवयोर्दशरथः पुत्रः शुक्लपक्षेन्दुरिव शनैः शनैर्वर्धमानः कमनीयश्च। अहमपि तव सर्वात्मना प्रियकरो वल्लभः। एते सर्वे त्वय्येव स्निग्धाः। तेषामनुरागं तिरस्कृत्य त्वं मरण एव निश्चयं कृतवती। अप्येतन्न ते क्रौर्यम्। सतां प्रेमिणां स्वर्गगमनमयुक्तं हि ॥६५॥

Derivation:—प्रतिपद्यते उपक्रम्यते पक्षोऽनयेति। प्रति+पद् क्विप्। आत्मन्+जन्+ड। रस्यते इति रसः अच्प्रत्ययः। वि+अव+षो+घञ्=व्यवसायः। प्रति+पद्+क्तिन्। नि+स्था+उरच्=निष्ठुरः ॥६५॥

धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः।
गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥६६॥

अन्वयः—अद्य मे धृतिः अस्तं इता। रतिः च्युता। गेयं विरतम्। ऋतुः निरुत्सवः। आभरणप्रयोजनं गतम्। शयनीयं परिशून्यम् ॥६६॥

मदिराक्षि मदाननार्पितं मधु पीत्वा रसवत्कथं नु मे ।
अनुपास्यसि वाष्पदूषितं परलोकोपनतं जलाञ्जलिम् ॥६८॥

अन्वयः—हे मदिराक्षि मदाननार्पितं रसवत् मधु पीत्वा परलोकोपनतं मे वाष्पदूषितं जलाञ्जलिं कथं नु अनुपास्यसि ॥६८॥

*Translation:*—O lady of bewitching (intoxicated) eyes, having (at first) drunk the luscious wine passed from my mouth (to yours), how, indeed, will you now drink the libation of water soiled by my tears and presented (to you) in the next world ? 68

संजी०—हे मदिराक्षि मत्तलोचने । प्रसंगोचितेयं सम्बुद्धिः । (माद्यति अनया इति मदिरा लोकप्रसिद्धा । तथापि "नार्यो मदिरालोचनाः" इत्यादि प्रयोगदर्शनात् माद्यति आभ्यामिति मदिरे अक्षिणी यस्याः तत्सम्बुद्धिः ।) मदानेनार्पितं (मन्मुखं संभृतं) रसवत् स्वादुतरं सुगन्धमाधुर्यं मधु मद्यं पीत्वा इदानीं परलोके उपनतं प्राप्तं वाष्पैः अश्रुभिः दूषितं तप्तं कलुषितं मे जलाञ्जलिं तिलोदकाञ्जलिं कथं नु (वितर्के) अनु अनन्तरं पास्यसि । तदनन्तरमिदमनर्हमित्यर्थः । मदाननार्पितस्य परलोकोपनतस्य च रसवतो वाष्पविन्दुदूषितस्य मधुनो जलाञ्जलेश्च महदन्तरमिति विवक्षा । यथाह भट्टमल्लः—"अनुपानं हिमजलं यवगोधूमनिर्मिते । दध्नि मद्ये विषे द्राक्षे पिष्टे मिष्टमयेऽपि च ॥" इति । तत्र इहैव युज्यते । इदं तूष्णं लोकान्तरोपयोगि च इत्यायुर्वेदविरोधात् कथं अनुपास्यसि भावः ॥६८॥

।—परः लोकः कर्म० । जलस्य अञ्जलिः ष० । इतरे

मदिराक्षि मदाननार्पितं मधु पीत्वा रसवत्कथं नु मे ।
अनुपास्यसि बाष्पदूषितं परलोकोपनतं जलाञ्जलिम् ॥६८॥

अन्वयः—हे मदिराक्षि मदाननार्पितं रसवत् मधु पीत्वा परलोकोपनतं मे बाष्पदूषितं जलाञ्जलिं कथं नु अनुपास्यसि ॥६८॥

Translation:—O lady of bewitching (intoxicated) eyes, having (at first) drunk the luscious wine passed from my mouth (to yours), how, indeed, will you now drink the libation of water soiled by my tears and presented (to you) in the next world? 68

संजी०—हे मदिराक्षि मत्तलोचने । प्रसंगोचितेयं सम्बुद्धिः । (माद्यति अनया इति मदिरा लोकप्रसिद्धा । तथापि "नार्यो मदिरालोचनाः" इत्यादि प्रयोगदर्शनात् माद्यति आभ्यामिति मदिरे लोचने यस्याः तत्सम्बुद्धिः । ) मदाननेनार्पितं ( मन्मुखं संभृतं ) रसवत् स्वादुवरं सुगन्धमाधुर्यं मधु मद्यं पीत्वा इदानीं परलोके उपनतं प्राप्तं बाष्पैः अश्रुभिः दूषितं तप्तं कलुषितं मे जलाञ्जलिं निवापाञ्जलिं कथं नु ( वितर्के ) अनु अनन्तरं पास्यसि । तदनन्तरमिदमनर्हमित्यर्थः । मदाननार्पितस्य परलोकोपनतस्य च रसवतो बाष्पबिन्दुदूषितस्य मधुनो जलाञ्जलेश्च महदन्तरमिति विवक्षा । यथाह भट्टमल्लः—"अनुपानं हिमजलं यवगोधूमनिर्मिते । दधि मद्ये विषे द्राक्षे पिष्टे निष्पन्देऽपि च ॥" इति । तच्च ईदृशं दुष्यते । इदं तूष्णं लोकान्तरोपयोगि च इत्यायुर्वेदविरोधात् कथं अनुपास्यसीति भावः ॥६८॥

समासः—परः लोकः कर्म० । जलस्य अञ्जलिः ष० । इतरे टीकायाम् ॥६८॥

विमर्श:—हे मन्दरनगर्ने अस्मिन संसारे मया सह त्वया मधुर आसव: कतिभापि पीत:। बहुशो मद्यस्य किंचित पानं कृत्वाऽव-शिष्टं मद्यं तुभ्यं प्रदत्तं मया तत् त्वया च पीतम्। हा गता त्वमधुना। कथने च मया। इदानीं ममाश्रुकणमिश्रितं तिलयुक्तो-दकाञ्जलि कथं पिबसि गता मे ममयाऽधुनापभोगस्य पानभोज-नस्य च ॥६८॥

Derivation: मद्+किरच मदिरा। अनिति अनेन इति आ+अन्+ल्युट्=आननम्। ऋ+णिच्+क्त अर्पितम्। रस+मतुप्। दूष्+क्त। उप+नम+क्त। अञ्ज्+अलि ॥६८॥

❀ ❀ ❀

विभवेऽपि सति त्वया विना सुखमेतावदजस्य गण्यताम्।
अहृतस्य विलोभनान्तरैर्मम सर्वे विषयास्त्वदाश्रया: ॥६९॥

अन्वय:—विभवे सत्यपि त्वया विना अजस्य सुखं एतावत् गण्यताम्। विलोभनान्तरै: अहृतस्य मम सर्वे विषया: त्वदा-श्रया: ॥६९॥

*Translation:*—Notwithstanding the abundance of wealth, the happiness of Aja without you may considered to be so much-ending with this. All the pleasure-objects of enjoyment of Aja, not attracted by other temptations, depended solely upon you. 69

संजी०—विभवे ऐश्वर्ये सति अपि त्वया विना अजस्य सुखं एतावद् इयदवधिकं गण्यताम्। यावत्त्वया सह भुक्तं तत: अन्यन्न किंचिद्भविष्यतीत्यर्थ:। कुत:। विलोभनान्तरै: विषयान्तरै: अन्यै-

विशेषेण लोभजनकवस्तुभिः ऐश्वर्यादिभिः अहृतस्य अनाकृष्टस्य मम सर्वे विषयाः भोगादयः त्वदाश्रयाः त्वदधीनाः। त्वां विना मे न किंचिद्रोचते इत्यर्थः ॥६९॥

समासाः—अन्यानि विलोभनानि नित्य स०। त्वं आश्रयः येषां बहु० ॥६९॥

विवृतिः—समाप्तमधुनाऽजस्य सुखम्। अवसितं मम जीवित-प्रयोजनम्। त्वयि मृते किं भोगेन। शब्दस्पर्शरूपरसगन्धाः सर्वे विषयाः सांप्रतं व्यर्थाः। न केनापि मम मनस आनन्दः स्यात्। सर्वेषां विषयाणां त्वमेव मूर्तिरासीः। नाहमिदानीं किमपि भोक्ष्ये ॥६९॥

Derivation:—वि+भू+अप्=विभवः। अस्+शतृ=सत्। एतत्परिमाणमस्येति एतावत् मतुप। हृ+क्त। वि+लुभ्+ल्युट् = विलोभनम्। वि+षि+अच्=विषिण्वन्दि विषयिणं संबध्नन्ति इति विषयाः। आ+श्रि+अच=आश्रयः ॥६९॥

❧ ❧ ❧

विलपन्निति कोशलाधिपः करुणार्थग्रथितं प्रियां प्रति।

अकरोत्पृथिवीरुहानपि स्रुतशाखारसबाष्पदुर्दिनान् ॥७०॥

अन्वयः—कोशलाधिपः इति करुणार्थग्रथितं प्रियां प्रति विलपन् पृथिवीरुहानपि स्रुतशाखारसबाष्पदुर्दिनान् अकरोत् ॥७०॥

*Translation:*—Lamenting in this manner for his beloved in expressions full of the sentiment of pathos the Lord of the Kosalas made even the trees shower heavily the tears of exudation dropping down from the branches.

[illegible] [illegible] इति ( उर्वी ) करुणः शोक-
[illegible] स एव अर्थः तेन [illegible] [illegible] (प्रसृतं) यथा तथा [illegible]
[illegible] [illegible] [illegible] ( [illegible] ) पृथिवीरुहान् वृक्षा-
णि । स्तुतः [illegible] [illegible] [illegible] [illegible] [illegible] स एव
[illegible] अश्रु [illegible] [illegible] [illegible] [illegible] । यथाभूतानन्तरम् "स्रुत—
[illegible]" इत्यपि पाठो दृश्यते । अचेतनान्यपि अरोदयत् किमुत
मनुष्यानिति भावः ॥७०॥

समासाः—करुणः अर्थः कर्मo । तेन [illegible] तृo । पृथिव्यां
रोहन्ति इति पृo—हाः उपo ॥७०॥

विवृतिः—अनेन प्रकारेण करुणाभोगोऽतिशोकपूर्ण-
वाक्योच्चारणेनेन्दुमतीकृते ररोद । तदाक्रन्दनमाकर्ण्य मन्ये तत्र-
स्थाः सर्वे वृक्षा अपि दुःखेन बाष्पमोचनं चक्रुः । तेषां बाष्पबिन्दु-
सन्ततिश्च विटपगलितरसरूपेण ददृशे । तस्य दुःखेऽचेतना अपि
सहभाजो बभूवुः का कथा सचेतनानां नराणाम् ॥७०॥

Derivation:—अधि+पा+क=अधिपः । वि+लप्+शतृ ।
ग्रन्थ+क्त । प्रो+क+टाप् । प्रथते विस्तारमेति इति पृथिवी प्रथ्+
षिवन्+ङीप् । रुह्+क । स्रु+क्त ॥७०॥

❀ ❀ ❀

अथ तस्य कथंचिदङ्कतः स्वजनस्तामपनीय सुन्दरीम् ।
विससर्ज कृतान्त्यमण्डनामनलायागरुचन्दनैधसे ॥७१॥

अन्वयः—अथ स्वजनः तस्य अङ्कतः कथंचिदपनीय कृतान्त्य-
मण्डनां तां सुन्दरीं अगरुचन्दनैधसे अनलाय विससर्ज ॥७१॥

Translation:—Then his relations, having with great difficulty removed that beautiful lady from his lap, consigned her, adorned with funeral decorations, to fire having the black aloe and sandal wood for its fuel. 71

अन्वयः—अथ (अनन्तरं) स्वजनः स्वः आत्मीयश्चासौ जन इति विग्रहः। बन्धुवर्गः तस्य अजस्य अङ्कतः उत्सङ्गात् कथंचिदपनीय। कृतं अन्त्यं मण्डनं यस्याः (तदन्त्यमण्डनामिति पाठे तत् लिङ्गसुमनमेव मण्डनं अलंकारो यस्याः) ताम् तां सुन्दरीं अगरुः कालागरुः चन्दनः श्रीखण्डः एव एधांसि इन्धनानि यस्य यस्मिन्वा अनेन मन्त्रसंस्कारोऽपि सूचितः। तस्मै अनलाय अग्नये विससर्ज ददौ। "क्रियाग्रहण मपि कर्तव्यम्" इति क्रियामात्रप्रयोगे सम्प्रदानत्वात् चतुर्थी ॥७१॥

समासाः—टीकायां द्रष्टव्याः ॥७१॥

विवृतिः—केनचित् कालेन तस्य राज्ञो ज्ञातयो मित्राणि च शोकं कुर्वतस्तस्योत्सङ्गादिन्दुमत्याः शवं दूरीकृत्य वहिसादकुर्वन्। प्रियकरस्यापि जनस्य मृतशरीरं दग्धव्यमेव। दाह एव प्रियजनमुद्दिश्य कर्तव्यं स्वजनानाम्। तयैव स्वर्गीयपुष्पमालया सा भूषिता। अग्नौ चन्दनकाष्टमेवासीत् ॥७१॥

Derivation:—अङ्क+तसिल्। अप+नी+ल्यप्। सु+उन्द्+अरन्+ङीप्=सुन्दरी। अन्ते भवम्, यत्। मण्ड्+ल्युट्=मण्डनम् अनलः नास्ति अलं पर्याप्तिः यस्य बहुदाह्यदहनेऽपि अग्नेः। इध्यतेऽनेनेतिएधस् इन्ध्+असि ॥७१॥

...दीप्=दैवी । जीव्+क्त । आ+अस्+अच्+टाप्=
...॥७२॥

अथ तेन दशाहतः परे गुणशेषामुपदिश्य भामिनीम् ।
विदुषा विधयो महर्द्धयः पुर एवोपवने समापिताः ॥७३॥

अन्वयः—अथ विदुषा तेन गुणशेषां भामिनीं उपदिश्य दशा-
हतः परे महर्द्धयः विधयः पुरः उपवने एव समापिताः ॥७३॥

*Translation*:—Then after ten days the rites, attended with great magnificence in honour of his beautiful wife whose virtues alone remained, were finished by that learned king in the very garden of his city. 73

संजी०—अथ विदुषा शास्त्रज्ञेन । साग्निकेनेत्यभिसन्धिः । तेनाजेन । गुणाः रूपादयः एव शेषाः यस्याः तां गुणशेषां भामिनीं इन्दुमती उपदिश्य उद्दिश्य । दशानां अह्नां समाहारो दशाहः । "तद्धितार्थ"—इत्यादिना समाहारार्थे तत्पुरुषः । समाहारस्यैकत्वा-देकवचनम् । "राजाहःसखिभ्यः टच्" इति टच् । "रात्राह्नाहाः पुंसि" इति पुल्लिङ्गता । "अह्नोऽह्न एतेभ्यः" इति अह्नादेशो न । "न संख्यादेः समाहारे" इति निषेधात् । ततः तसिल् । तस्मात् दशा-हतः परे ऊर्ध्वं कर्तव्याः महर्द्धयः महासमृद्धयः विधयःक्रियाः पुरः पुर्या उपवने उद्याने एव समापिताः सम्पूर्णमनुष्ठिताः । "दशाहतः" इत्यत्र "विप्रः शुद्ध्येद्दशाहेन द्वादशाहेन भूमिपः । वैश्यः पंचदशाहेन शुद्ध्यति" इति मनुवचनविरोधो नाशङ्कनीयः । तस्य निर्गुणक्षत्रिय-विषयत्वात् । गुणवत्क्षत्रियस्य तु दशाहेन शुद्धिमाह पराशरः "क्षत्रियस्तु दशाहेन स्वधर्मनिरतः शुचिः" इति । सूचयतेऽस्यापि गुणवत्त्वं विदुषेत्यनेन ॥७३॥

समासाः—महती ऋद्धिः येषु ते ... ॥७३॥

विवृतिः [illegible] इन्दुमत्या गुणा एव संसारे शिक्षाः । [illegible] राजा तस्या और्ध्व-दैहिकक्रियां [illegible] उद्याने चकार । [illegible] अग्निसंयोगक्रिया-[illegible] । अजस्तु विद्वान् । अत एव स [illegible] संजातः ॥७३॥

Derivation:—शिष्+क्त । उप+दिश्+ल्यप् । भाम् (दीप्तौ)+णिनि+ङीप् भामिनी । विद्+क्वसु=विद्वस् । सम्+आप+णिच्+क्त ॥७३॥

स विवेश पुरीं तया विना क्षणदापायशशाङ्कदर्शनः ।
परिवाहमिवावलोकयन्स्वशुचः पौरवधूमुखाश्रुषु ॥७४॥

अन्वयः—तया विना क्षणदापायशशाङ्कदर्शनः सः पौरवधूमुखाश्रुषु स्वशुचः परिवाहं इव अवलोकयन् पुरीं विवेश ॥७४॥

*Translation:*—The king looking like the moon at the close of the night entered his capital without her, beholding as it were, the outflow of his sorrow in the tears on the faces of the city women. 74

संजी०—तया इन्दुमत्या विना। (निष्प्रभत्वात्) क्षणदायाः रात्रेः अपाये अपगमे यः शशाङ्कः चन्द्रः स इव दृश्यते इति क्षणदा० । प्रातःकालिकचन्द्रः इव दृश्यमानः इत्यर्थः। दृश्यते इति कर्मार्थे ल्युट्। सः अजः पौरवधूमुखाश्रुषु स्वशुचः स्वशोकस्य परिवाहं जलोच्छ्वासं इव अवलोकयन्। "जलोच्छ्वासाः

अन्वयः—यतः मुनिः असमाप्तविधिः तव तापकारणं विद्वानपि ततः च्युतं भवन्तं प्रकृतौ स्थापयितुं स्वयं न उपस्थितः ॥७६॥

*Translation:*—Though he knows the cause of your grief, the sage has not come personally to restore you to your natural state from which you have fallen because he has not yet finished the rites (of the sacrifice). 76

संजी०—यतः हेतोः मुनिः असमाप्तविधिः असमाप्तक्रतुः ततः हेतोः तव तापकारणं दुःखहेतुं कलत्रनाशरूपं विद्वान् जानन् अपि । "विदेः शतुर्वसुः" इति वस्वादेशः । "न लोक"—इत्यादिना षष्ठी-प्रतिषेधः । ततः स्वभावात् च्युतं भ्रष्टं भवन्तं प्रकृतौ स्वभावे स्थाप-यितुम् । समाश्वासयितुमित्यर्थः । स्वयं नोपस्थितः नागतः ॥ ७६ ॥

समासाः—न समाप्तः नञ् । असमाप्तः विधिः येन बहु० । तापस्य कारणं ष० ॥७६॥

विवृतिः—महर्षिणोपाध्यायेन यज्ञः समारब्धः स चाद्यापि न पूर्णः । भवतो दुःखप्रभवत्वेन चित्तैकाग्र्येणाभिज्ञातम् । तथापि यज्ञ-दीक्षितत्वात्स स्वयं भवन्तं समाश्वासयितुं न प्राप्तः । मां स प्रेषित-वान् ॥७६॥

Derivation:—सम्—आप्—क्त । वि–धा–कि=विधिः । मन्–इन=मुनिः । विद्–शतृ (वसु)=विद्वस् । तप्–घञ्=तापः । कृ–णिच्–ल्युट्=कारणम् । प्र–कृ–क्तिन् । स्था–णिच्–पुक्–तुमुन् ॥७६॥

अन्वयः—हे सुवृत्त ! लघुसन्देशपदा तस्य मुनेः सरस्वती मयि वर्तते । हे विश्रुतसत्वसार । तां शृणु । एनां हृदि उपधातुं च अर्हसि ॥७७॥

*Translation:*—O virtuous king, his words in which his brief message is couched are entrusted to me (to be communicated to you). Hear them, O king well-known for your mental power; you will please treasure them in your heart. 77

संजी०—हे सुवृत्त सदाचार । सन्दिश्यते इति सन्देशः सन्देष्टव्यार्थः । तस्य पदानि वाचकानि सन्देशपदानि लघूनि संक्षिप्तानि यस्यां सा लघुसन्देशपदा तस्य मुनेः सरस्वती वाक् मयि वर्तते । हे विश्रुतसत्वसार प्रख्यातधैर्यातिशय । तां सरस्वतीं शृणु । त्वं एनां वाचं हृदि उपधातुं धर्तुं च अर्हसि ॥७७॥

समासाः—शोभनं वृत्तं यस्य बहु० । सन्देशस्य पदानि ष० । लघूनि स० यस्याम् बहु० । सत्वस्य सारः ष० । विश्रुतः स० यस्य बहु० ॥७७॥

विवृतिः—हे साधुवृत्त सद्गुण गुरोरुपदेशोऽल्पशब्दयुक्तः । तेन च स मम द्वारा प्रेषितः । तमधुनाऽहं तुभ्यं कथयामि । धैर्यमेरुर्भवान् । भवता च गुरोर्वाणी श्रोतव्या मनसि धारणीया च । तेन शोको गच्छेत् ॥ ७७ ॥

Derivation:—वृत्+क्त । सम्+दिश्+घञ् । सरस्+मतुप्+ङीप् । वि+श्रु+क्त । अस्+शतृ=सत+त्व=सत्त्वम् । सृ+घञ्=सारः । उप+धा+तुमुन् ॥७७॥

वक्ष्यमाणार्थानुगुणं मुनेः सर्वज्ञत्वं तावदाह—

पुरुषस्य पदेष्वजन्मनः समतीतं च भवच्च भावि च ।
स हि निष्प्रतिघेन चक्षुषा त्रितयं ज्ञानमयेन पश्यति ॥७८॥

अन्वयः—अजन्मनः पुरुषस्य पदेषु समतीतं च भवत् च भावि च त्रितयं स निष्प्रतिघेन ज्ञानमयेन चक्षुषा पश्यति हि ॥७८॥

*Translation:*—Indeed by his unimpeded eye of knowledge the sage sees the triad—the past, the present and the future—in the three steps of the God (Trivikrama) who has no birth (in all the three worlds) 78

संजी०—अजन्मनः पुरुषस्य पुराणपुरुषस्य भगवतः त्रिविक्रमस्य पदेषु विक्रमेषु । त्रिभुवनेषु अपि इत्यर्थः । समतीतं भूतं च भवत् वर्तमानं च भावि भविष्यत् च इति त्रितयं स मुनिः निष्प्रतिघेन अप्रतिबन्धेन ज्ञानमयेन चक्षुषा ज्ञानदृष्ट्या पश्यति हि । अतस्तदुक्तिषु न संशयितव्यमित्यर्थः ॥७८॥

समासाः—न प्रतिघः यस्य तद् ॥७८॥

विवृतिः—विशिष्टर्षिः खलु स आचार्यः । स सर्वत्र सर्वं द्रष्टुं शक्नोति । त्रिभुवने तन्नास्ति यत्स ज्ञातुमक्षमः । अतीतानागतवर्तमानेषु त्रिष्वपि कालेषु यज्जायते तस्य ज्ञाता सः । यतस्तस्यार्षी दृष्टिः ॥७८॥

Derivation:—सम्+अति+इण्+क्त । भू+शतृ=भवत् । भू+णिनि=भाविन । प्रति+हन्+ट (कुत्वं) प्रतिघः चक्ष्+उस् । त्रि+तयप्-प्रत्ययः अवयवार्थे । ज्ञा+ल्युट्+मयट् ॥७८॥

स तपःप्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमाम् ।
अशपद्भव मानुषीति तां शमवेलाप्रलयोर्मिणा भुवि ॥८०॥

अन्वयः—स शमवेलाप्रलयोर्मिणा तपःप्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमां तां भुवि मानुषी भवेत्यशपत् ॥८०॥

*Translation:*—That sage, through rage caused by the obstacle to his penance, a destructive wave to the shore of his tranquility, cursed her who manifested before him her charming flirtations in this way: "Be thou a mortal female on the earth." 80

संजी०—सः मुनिः । शमः शान्तिः एव वेला मर्यादा । तस्याः प्रलयोर्मिणा प्रलयकालतरङ्गेण । शमविघातकेनेत्यर्थः । "अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि" इति यादवः । तपसः प्रतिबन्धेन विघ्नेन यो मन्युः क्रोधः तेन हेतुना । प्रमुखे अग्रे आविष्कृतचारुविभ्रमां प्रकाशितमनोहरविलासां तां हरिणीं भुवि भूलोके मानुषी मनुष्यस्त्री भवेत्यशपत् शशाप ॥८०॥

समासाः—चारुः विभ्रमः कर्म० । प्रमुखे आविष्कृतः स० प्र० चा० यया बहु० प्रलये ऊर्मयः स० ॥८०॥

विवृतिः—तृणबिन्दुरसामान्यपिरासीत् । यद्यपि हरिण्या निजवदने तथा च विशिष्टावयवेषु तस्य तपश्चर्यायां विघ्नान् पातयितुं तं च वशीकर्तुं मनोहरविलासचेष्टाः प्रदर्शितास्तथापि स न च्युतः । किन्तु तत्सञ्जातेन क्रोधेन स तां शशाप यथा यस्मात्त्वं शान्तिसागरं क्षोभयितुं प्रयतसे तस्मान्मृत्युलोकं गत्वा कस्यचिन्मर्त्यस्य पत्नी भव । एष मम कल्पान्तकालक्रोधस्य तरङ्गः । अनुभव तस्य प्रभावम् ॥८०॥

Derivation:—प्रति+बन्ध+घञ् । मन्+युच्=मन्युः । आविस्+कृ+क्त । वि+भ्रम्+घञ् । मनु+अण्+पुक्+ङीप् । प्र+ली+अच् ॥८०॥

  

भगवन् परवानयं जनः प्रतिकूलाचरितं क्षमस्व मे ।
इति चोपनतां क्षितिस्पृशं कृतवाना सुरपुष्पदर्शनात् ॥८१॥

अन्वयः—भगवान् अयं जनः परवान् मे प्रतिकूलाचरितं क्षमस्व इति उपनतां च आ सुरपुष्पदर्शनात् क्षितिस्पृशं कृतवान् ॥८१॥

*Translation:*—"Revered sir! This person is dependent on another, Indra; forgive my offensive conduct." He (then) made her, thus humbled, an earthly being until she saw heavenly flowers. 81

संजी०—हे भगवन् महर्षे अयं जनः परोऽस्यास्तीति स्वामित्वेन परवान्पराधीनः । अयमित्यात्मनिर्देशः । अहं पराधीनेत्यर्थः । मे मम प्रतिकूलाचरितं अपराधं क्षमस्व । इति अनेन प्रकारेणोपगतां शरणागतां च हरिणीं आ सुरपुष्पदर्शनात् सुरपुष्पदर्शनपर्यन्तं क्षितिं स्पृशतीति क्षितिस्पृक् तां क्षितिस्पृशं मानुषीं कृतवान् अकरोत् । दिव्यपुष्पदर्शनं शापावधिरित्यनुगृहीतवानित्यर्थः ॥८१॥

समासाः—प्रतिकूलं आचरितं कर्म० । क्षि० उप० । प्रतीपं कूलात् गति० । सुरपुष्पदर्शनात् ष० ॥८१॥

विवृतिः—एवं शप्ता सा देवस्त्री दुःखिता भूत्वा प्रार्थयत मुनिं यथा भगवन्महर्षे न मया स्वेच्छया किन्त्विन्द्राज्ञया विलासप्रदर्शना-

पराधो विहितः। स देवराट् पुनस्तस्य स्वामी। परतन्त्राहम्। क्षमां कुर्विति। तेन शरणागतरक्षकः कृपालुः स स्वर्गीयकुसुमावलोकनेन निवर्तते मे शाप इत्युवाच ॥८१॥

Derivation:—भग–मतुप् (वत्)। पर–मतुप् (वत्)। आ+ चर्+क्त भावे। उप–नम्–क्त–टाप्। गिरि+स्पृश्–क्विप्। क्षै+क्तवतु निष्ठायाम्। दृश्–ल्युट् दर्शनम् ॥८१॥

क्रथकैशिकवंशसम्भवा तव भूत्वा महिषी चिराय सा।
उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ॥८२॥

अन्वयः—क्रथकैशिकवंशसम्भवा सा तव महिषी भूत्वा चिराय दिवः च्युतं शापनिवृत्तिकारणं उपलब्धवती विवशा ॥८२॥

*Translation:*—Born in the family of Krathakais'ikas, she, having become your queen, obtained after a long time the means of the end of the curse (flowers), dropped down from the sky and died. 82

संजी०—क्रथकैशिकानां राज्ञां वंशे सम्भवो यस्याः सा हरिणी तव महिषी अभिषिक्ता स्त्री। "कृताभिषेका महिषी" इत्यमरः। भूत्वा चिराय दिवः स्वर्गात् च्युतं पतितं शापनिवृत्तिकारणं सुरपुष्परूपं उपलब्धवती विवशा अभूदिति शेषः। मृतेत्यर्थः ॥८२॥

समासः—शापस्य निवृत्तेः कारणम् ष०। वंशे सम्भवो यस्याः व्यधिकरण ब० ॥८२॥

विवृतिः—सैव देवाङ्गना हरिणी, हे नृप, विदर्भराजकन्या सञ्जाता। अथ तव पट्टराज्ञी च बभूव। इदानीं स्वर्गात् पतितां पुष्पमालां दृष्ट्वा तस्याः शापमोक्षो जातः। अतएव सा पञ्चत्वं गता। अप्सराः सा दिवि सुखं तिष्ठति ॥८२॥

Derivation: — सम्--भू+अप्। भू+क्त्वा। मह्+टिषच्+ङीप्=महिषी। लभ्+क्तवतु+ङीप्। च्यु+क्त। शप्+घञ्। वृत्+क्तिन्। कृ+णिच्+ल्युट् करणे ॥८२॥

तदलं तदपायचिन्तया विपदुत्पत्तिमतामुपस्थिता।
वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः ॥८३॥

अन्वयः—तत्तदपायचिन्तयाऽलम्। उत्पत्तिमतां विपदुपस्थिता। त्वयेयं वसुधाऽवेक्ष्यताम्। हि नृपाः वसुमत्या कलत्रिणः ॥८३॥

*Translation:*—Enough, therefore, of thinking of her death, because beings that are born have this calamity of death near at hand. Let this earth be protected by you; for kings have their wife in the Earth. 83

संजीविनीः—तत्तस्मात्तस्या अपायचिन्तयाऽलम्। तस्या मरणं न चिन्त्यमित्यर्थः। निषेधक्रियां प्रति करणत्वाच्चिन्तयेति तृतीया। कुतो न चिन्त्यमत आह। उत्पत्तिमतां जन्मवतां विपद् विपत्तिरुपस्थिता सिद्धा। जातस्य हि ध्रुवो मृत्युरेवेत्यर्थः। तथापि कलत्ररहितस्य किं जीवितेन। तत्राह—त्वयेयं वसुधा भूमिरवेक्ष्यतां पाल्यताम्। हि यस्मात् नृपाः वसुमत्या पृथिव्या कलत्रिणः कलत्रवन्तः। अतो न शोचितव्यमित्यर्थः ॥८३॥

समासाः—अपायस्य चिन्ता ष० ॥८३॥

विवृतिः—शापान्निवृत्ता सा सुरस्त्री पुनरपि स्वर्गं गता। तस्मात्तस्या मरणेन हेतुना कोऽपि शोको न कर्तव्यः। उक्तं च भगवता गीतायां जातस्य हि ध्रुवो मृत्युरिति तदपि विचार्यम्। अधुना

अक्लीवतया धैर्येण लिङ्गेन पुनः प्रकाश्यताम्। विदुषा सर्वास्ववस्थास्वपि धीरेण भवितव्यम् ॥८४॥

समासाः—मदेन वाच्यं तृ०। न क्लीवता नञ्॥८४॥

विवृतिः—यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता। एकैकमप्यनर्थाय साधारणमनुष्ये भवति। सर्वे तस्मिन्सत्यपि त्वयि जितेन्द्रियत्वं धैर्यं च दृष्टम्। अधुनैतद् दुःखमुत्पन्नम्। तदेव धीरत्वं प्रदर्श्यताम्। सम्पत्तौ च विपत्तौ च महद्भिरेकरूपैरेव भाव्यम्। त्वं च महान्॥८४॥

Derivation:—उत्+इ+अच्=उदयः। वच्+ण्यत् (भावे को न) उज्झ+शतृ=उज्झत्। श्रु+क्त। आत्मन्+मतुप्+तल्+टाप्। मन्यतेऽनेन-असि। क्लीव+तल्+टाप्॥८४॥

❁ ❁ ❁

इतोऽपि न रोदितव्यमित्याह—

रुदता कुत एव सा पुनर्भवता नानुमृताऽपि लभ्यते।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम्॥८५॥

अन्वयः—रुदता भवता सा कुत एव लभ्यते। अनुमृताऽपि पुनर्न। परलोकजुषां देहिनां गतयः स्वकर्मभिर्भिन्नपथाः॥८५॥

*Translation:*—How can she be obtained by even if you weep for her? She cannot be obtained by you even if you die after her. The paths of persons going to the other world are quite different according to their own actions. 85

संजी०—रुदता भवता सा कुत एव लभ्यते। न लभ्यते एव। अनुम्रियते इत्यनुमृत् क्विप्। तेन अनुमृतवताऽपि भवता

पुनर्न लभ्यते। ननु अनुमृतेन परत्र लभ्यते। तदपि नेत्याह। परलोकजुषां लोकान्तरभाजां देहिनाम्। गम्यन्ते इति गतयो गन्यस्थानानि स्वकर्मभिः पूर्वाचरितपुण्यपापैर्भिन्नपथाः पृथक्कृतमार्गाः हि। परत्रापि स्वस्वधर्मानुरूपफलभोगाय भिन्नदेहगमनान्न मृतेनापि लभ्यत इत्यर्थः ॥८५॥

समासाः—परः लोकः कर्म०। तं जुषते इति परलोकजुट् उप०। स्वं कर्म कर्म०। भिन्नाः पन्थानो यासां बहु० ॥८५॥

विवृतिः—यद्यपि भवान् भृशमाक्रन्दति स्वर्गता राज्ञी भूयो न प्राप्येत। आत्मत्यागेनापि तस्या दर्शनं न स्यात्। मनुष्याः स्वकर्मानुसारेण नानामार्गैः स्वर्गं यान्ति नानायोनिषु च जन्म प्राप्नुवन्ति। अत एवालापो वृथा ॥८५॥

Derivation:—रुद्+शतृ। प०+जुष्+क्विप्। गम्+क्तिन्। भिद्+क्त+पथिन्+अ। देह—इनिः ॥८५॥

❦ ❦ ❦

अपशोकमनाः कुटुम्बिनीमनुगृहाण निवापदत्तिभिः।
स्वजनाश्रु किलातिसन्ततं दहति प्रेतमिति प्रचक्षते ॥८६॥

अन्वयः—अपशोकमनाः कुटुम्बिनीं निवापदत्तिभिः अनुगृहाण। अतिसन्ततं स्वजनाश्रु प्रेतं दहतीति प्रचक्षते किल ॥८६॥

*Translation*:—With your mind relieved of grief favour your wife by offering (libations of water, rice-balls etc). Continuous flow of tears of relations burn, they say, the departed soul. 86

संजी०—किन्तु अपशोकमना निवृत्तचित्तः सन् कुटु[illegible]

संजी०—शरीरिणां मरणं प्रकृतिः स्वभावः। ध्रुवमित्यर्थः। जीवितं विकृतिः यादृच्छिकं बुधैः उच्यते। एवं स्थिते जन्तुः प्राणी क्षणमपि। अत्यन्तसंयोगे द्वितीया। श्वसन् अवतिष्ठते यद्यसौ लाभवाननु। जीवने यथालाभं सन्तोष्टव्यम्। अलभ्य-लाभात्। मरणे तु न शोचितव्यम्। अस्य स्वाभाव्यादिति भावः॥८७॥

विवृतिः—जातस्य हि ध्रुवो मृत्युः जन्मग्रहणमेवास्वाभाविकम्। तस्मादिन्दुमत्यां गतायां पण्डितेन भवता न शोको विधेयः। सा एतावत्कालपर्यन्तं तव समीप आसीत्स एव लाभः खलु। प्रत्ये-कस्य दृष्टस्य वस्तुनो नाशो ध्रुवः॥८७॥

Derivation:—म्रियते इति भावे ल्युट्। प्र+कृ+क्तिन्। शरीर+इन्। जीव्+क्त। बुध्+क। श्वस्+शतृ। जन्+तु। लभ्+घञ् मतुप्॥८७॥

अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम्।

स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम्॥८८॥

अन्वयः—मू० प्रि० हृदि अ० शल्यमवगच्छति। स्थि० तदेव स० मन्यते कुश०॥८८॥

*Translation*—An ignorant person looks upon the loss of a dear person as a dart fixed in the heart while a firm-minded (wise) person regards the same as a dart taken out from his heart on account of its serving as a gate to blessedness (absolution). 88

संजी०—मूढचेतनः भ्रान्तबुद्धिः प्रियनाशं इष्टनाशं हृदि

अन्वयः—स उदारमतेः विनेतुः वचः तथेति प्रतिगृह्य मुनिं विससर्ज। तत् शोकघने अस्य हृदि अलब्धपदं सत् गुरोः अन्तिकं प्रतियातमिव ॥९१॥

*Translation:*—Accepting the word of the generous-minded preceptor with "Be it so" he dismissed the sage; but the message, not finding a place in his heart full of grief, returned, as it were, to his preceptor. 91

संजी—सः अजः उदा० विनेतुः गुरोः वसिष्ठस्य वचः तच्छिष्यमुखेरितं तथेति ( ॐ इति ) प्रति० अङ्गीकृत्य मुनिं वसिष्ठशिष्यं विससर्ज प्रेषयामास। किन्तु तद्वचः शोकघने दुःखसान्द्रे अस्य अजस्य हृदि अलब्धपदं अप्राप्तावकाशं सत् गुरोः वसिष्ठस्य अन्तिकं प्रतिनिवृत्तमिव किमु इत्युत्प्रेक्षा। तोटकवृत्तमेतत्—"इह तोटकमम्बुधिसैः प्रथितम्" इति तल्लक्षणम् ॥९१॥

समासाः—उदारा मतिर्यस्य ब०। न लब्धं (नञ्) पदं येन ब०। शोकेन घनं तृ० ॥९१॥

विवृतिः—समाप्ते गुरोरुपदेशेऽजः समीचीनमेवोपदिष्टमाचार्येण तथा क्रियत इत्युक्त्वा तं शिष्यं प्रेषयामास। गतः स ऋषिः। तस्मिन्याते सति तस्य पश्चादुपदेशोऽपि वशिष्टाश्रममेव जगामेति मन्ये। यतो दुःखितोऽजस्तस्य निजान्तःकरणे स्थानं न ददौ। प्रियतमा हि वैदर्भी राज्ञः। तां विस्मर्तुं कथं शक्यते ॥९१॥

Derivation:—वि+नी+तृच्। मन्+क्तिन्। प्रति+ग्रह्+ल्यप्। वच्+असुन्=वचस्। मन+इन्+डस्वम्। लभ्+क्त। शुच्+घञ्=शोकः। प्रति+या+क्त ॥९१॥

आसाद्य पूर्वा० कान्तया सं० नन्द० ली० पुनररमत ॥९५॥

*Translation:*—On account of abandoning his body at the sacred place formed by the confluence of the Ganges and the Sarayū, Aja immediately secured an enlisting i.e. a place in the number of the immortals and, being united with his wife, now possessing a loveliness surpassing that of her former form, he sported again in the pleasure-houses within the Nandan garden. 95

संजी०—असौ अजः जह्नुकन्यासरय्वोस्तोयानां जलानां व्यतिकरेण सम्भेदेन भवे तीर्थेगङ्गासरयूसंगमे देहत्यागात्सद्य एवामरगणनानां लेख्यं लेखनम्। "तयोरेव कृत्यक्तखलर्थाः" इति भावार्थे ण्यत्प्रत्ययः। आसाद्य प्राप्य। पूर्वस्मादाकारादधिकतरा रुक् कान्तिर्यस्यास्तया। ("अधिकचतुरया" इति पाठे अधिकं चतुरया सुभगया) कान्तया रमण्या संगतः सन्। नन्दनस्येन्द्रोद्यानस्याभ्यन्तरेष्वन्तर्वर्तिषु लीलागारेषु क्रीडाभवनेषु पुनररमत॥ "यथा कथंचित्तीर्थेऽस्मिन्देहत्यागं करोति यः। तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि।" इति स्कान्दे॥ मन्दाक्रान्तावृत्तम्। तल्लक्षणम्—"मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्" इति ॥९५॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशव्याख्यायां संजीविनीसमाख्यायां अष्टमः सर्गः॥

समासः—जह्नोः कन्या ष०। सा च सरयूश्च द्वं०। अमरगणना षः। तस्यां लेख्यं स०। पूर्वः आकारः कर्म०। तस्मादधिकतरा पं०। पू० तरा रुक् यस्याः ब०। लीलार्थं आगारं मध्य०

earth was covered with the fat of मधु and कैटभ demons killed by विष्णु. ध्वन्यते—is suggested. अपकर्षः—Dishonour. उत्प्रेक्षा.

V. 4. बभूव Perf. of भू. परैः कर्तरि तृ० । अथर्व० verses from अ०, recited at the ceremony, confer long life and prosperity on the king. शस्त्र is used by physical means and अस्त्र by spiritual means—the recitation of a मन्त्र. ब्रह्म—the energy of a ब्राह्मण. vide शाकुं० शमप्रधानेषु तपोधनेषु etc. पवनाग्नि० In a द्वन्द्व स० words ending in इ and उ (शेषो घ्यसखि) should be used first. हरिहरौ. But this rule is not compulsory as, काशिका sage, पाणिनि himself shows this in "लक्षणहेत्वोः क्रियायाः" where he does not use हेतु first. मनुः If Brahmanas and kings co-operate, then both bring prosperity to the world. This verse is not found in the present मनुस्मृति.

V. 5. प्रतिपेदे—Perfect.

V. 6. शुशुभे. Perf.—शुभंयु-अहं (pride) and शुभं (fortune) take the युस् term. showing possession—ऋतः ठञ्—Words ending in ऋ take ठञ् the substitute for which is क. इ of पितृ takes वृद्धि on account of ञ् in ठञ्.

V. 7. महाभुजः—महत् is changed to महा in a कर्म० or बहु०. भुज् meaning any thing other than protecting is Atm. उपमालंकारः.

V. 8. महीपतेः मतः—The P. P. P. of मन्, बुध्, पूज् and some other roots having the same sense are

used in the sense of the present and they are construed with the gen. कर्तृ०—Nouns derived from roots govern the gen. in the sense of कर्ता and कर्म. अस्य means अनेन.

V. 9. उशना. रामन्द्र—is a writer of नीतिशास्त्र. As can be seen from the quotation, his verses are very easy. vide किरात०—सनदृनिरवैति मार्दवं समये यश्च तनोति तिग्मताम् । अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपतिः ॥ महा० तीक्ष्णा दुद्विजते लोको मृदुः सर्वत्र बाध्यते । एवं बुद्ध्वा महाराज मा तीक्ष्णो मा मृदुर्भव ॥ अनुद्धरन्—Pre. parti. of धृ with उद्.

V. 10. आत्मवत्तया Another reading आत्मा विद्यते अस्य न आत्मवान् तस्य भावः तया—The king was self-controlled, careful or vigorous, had all the qualities of the soul such as शान्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रगल्भ्यं etc. आत्मवित्ता meaning proper duty knowing himself well. विषयेषु—शब्दस्पर्शरूपरसगन्धेषु. अनिच् augment comes after a बहु० if धर्म is preceded by a single member; so विनाशधर्मन्. प्रह्लादयस्तथः दीव्यन्ति अत्र इति त्रिदिवम्.

V. 11. परिणामः—Old age. यम may mean a moral duty: ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्पता । अहिंसास्तेय-माधुर्ये दमश्चेति यमाः स्मृताः ॥ See उत्तर० पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धे क्ष्वाकुभिर्धृतम् ॥

V. 12. शिरसा—इत्यंभूतलक्षणे or उपलक्षणे तृ०. One should bow with the covered head. प्रणिपत्य—Absolutive. समानेऽन्यपूर्वे क्त्वोल्यप् ।

V. 13. ईप्सितं—P. P. P. of the desi. of आप्.

आत्मजप्रिय: or प्रियाआत्मज: by वा प्रियस्य.

V. 14. मल्लिनाथ has discussed at length how the theory that ब्राह्मणs alone can take up सन्यासाश्रम is not sound. प्रव्रजेत्—Should leave the world and turn a recluse.

V. 15. प्रशम:— Restraining the mind from the pursuit of worldly objects. निभृत—Filled up and so sinking down. तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्। तुला and उपमा should not be used with the instr.; but poets use them with तृ० मल्लि० says if तुला means सदृश ( adj. ), then तृ० is not used; here it means सादृश्य ( noun ) and so तृ० can be used. This defence is weak. Grammarians take it to be a case of सहयुक्ते where सह is not used.

V. 16. The chief emblems of royalty and of a recluse are given in the विवृति. अपवर्ग: is a noun from वृज् to leave, leaving all worldly objects, धर्म:—"यतोऽभ्युदयनि:श्रेयससिद्धि: स धर्म:" Performance of duties and renunciation to get absolution. उपमालंकार:.

V. 17. नीति:—अर्थशास्त्रं politics. अधिगमाय-अधिगन्तुम्-"तुमर्थान्च भाववचनात्" इति चतुर्थी. शारद is autumnal, fresh, clever. अनपायि—*Cf* यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" गीतायाम् । योगी "योगश्चित्तवृत्तिनिरोध:" ।

V. 18. व्यवहार Administration of justice वि नानार्थेऽव सन्देहे हरणं हार उच्यते । नानासन्देहहरणात् व्यवहार इति स्मृत: ॥ "व्यवहारान् नृप: पश्येत". धर्मासनं, कार्यासनं, व्य० नं—judgment

the same sense, govern पञ्चमी. आरम्—रम् 'to sport', preceded by वि, आ or परि is परस्मै०. The prepo. आ meaning 'till' governs पंचमी. योगवित्: Deliberating and realising the identity of आत्मा and परमात्मा. It may mean the practice of contemplation. स्थिरधीः— स्थितप्रज्ञ a sage of steady mind. vide गीता II. स्थिरा 'अहं ब्रह्म' इति बुद्धि यस्य. "दुःखेषु अनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थितधीः (स्थिरधीः) मुनिरुच्यते॥

V. 23. इन्द्रियेषु—वैषयिकी सप्तमी. जाग्रत् pre. par. of जागृ. प्रसर: (1) Extension of power, onward movement; (2) Thirst for pleasures. उभ dual only, उभय sing. and plu. only. उभ+तयप् प्रकारार्थे—तयप् is changed to अय. of two sorts. उदात्तस्वर is acute accent in Vedas. टिड्ढाणञ् द्वयसच् दघ्नञ् मात्रच् तयप् ठक्ठञ् कञ् क्वरपः Words formed by terminations with ट् and ढ in them and अण् and the rest in this Sutra take ङीप् (ई) in the fem, so उभय-उभयी.

V. 24. व्यपेक्षया—हेतौ तृ०. सम०—मानापमानयोःसुखदुःखयोश्च समदर्शी. समाः—स मन्ति सर्वं agitating all; years. Used in plu. generally. गमयित्वा—abso. of the cau. of गम्. तमसः परं—Beyond माया-अविद्या; परमात्मपदम्. अव्येति न व्ययो यस्य इति अव्ययं—not decaying. पुरि देहे शेते इति पुरुषः पृषोदरादिः The spirit lying in the body..

V. 25. अग्नौ with अग्नि the root चि takes क्विप्, the प brings तुक् (by ह्रस्वस्य पिति कृति तुक्) because चि ends in इ, क् debars गुण or वृद्धि and वि is dropped;

be taken respectively with श्रुत etc. ऋणं देवस्य यज्ञेन पितॄणां दानकर्मणा । सन्तत्या पितृलोकानां धावयित्वा परिव्रजेत् ॥ उपेयिवान् perf. part. of इ with उप.

V. 31. *Cf* आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि । शाकु०. विद्वस्—विदन् or विद्वान् by विदेः शतुर्वसुः—वसु is a substitute for शतृ. गुणवत्ता means गुणाः .

V. 32. सुप्रजाः—प्रजा and मेधा when preceded by सु, दुस् and अ in a वहु० become प्रजस् and मेधस्. शचीसखः—राजाहः सखिभ्यः टच्-सखि is changed to सख in a तत्पु०. मरुतां—कर्तृकर्मणोः कृति इति कर्मणि षष्ठी. In ऋग्वेद मरुतः are storm gods and they are forty-nine. They are independent of Indra whose friends they are. But later on it came to mean gods and so Indra came to be called their lord also. उपमा.

V. 33. गोकर्ण—A place of pilgrimage in the south of India. उपवी० Infi—of the denom. from वीणा. तुमुन्—तुम् of Inf. "सत्यापपाशरूपवीणातूल श्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्" All these words take णिच्—अय to be conjugated like चुर. नारद is a मानसपुत्र of ब्रह्मा and one of the ten creators. मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुः । भृगुर्वसिष्ठो दक्षश्च नारदो दशमस्तथा ॥ He is a great wanderer, an inventor of वीणा and कीर्तन, a universal messenger and exciter of quarrels. उदगा०—From north to south in the sky.

V. 34. आतोद्यशब्दः वाद्यचतुष्टयस्य वाचकः । ततं चैवानुविद्धं च घनं शुषिरमेव च। Any one of the four kinds of musical

instruments. Here it means वीणा. ऐतिह्य abstract from इतिह—as history says.

V. 35. सृजती pre. part. fem. of सृज्. वा optionally नुम् in the neuter pres. parti. of the roots of the 3rd conj. नुम्-न् is inserted, in the plural as ददन्ति-ददति. So also आत्-अवर्णान्तात् अंगात् पर. यः शतु. अवयवः तदन्तस्य अंगस्य नुम्-न्-वा स्यात्. शीनद्योः परतः । तुदन्ती—तुदती fem. If a root belongs to the sixth conj., the femi. pre. part. takes न् optionally. सृजन्ती—सृजती. अनुसारिणि:—ताच्छील्ये णिनिः or इनिः उत्प्रेक्षालंकारः.

V. 36. आर्तवीम्. Before अण्, ऋ of ऋतु takes वृद्धि by तद्धितेषु अचामादेः—अचः वृद्धिः णिति ञिति कित्ति परे ।

V. 37. उपमा. तमस् Darkness or shadow personified as a demon.

V. 38. दृष्टान्तालंकारः

V. 39. उत्प्रेक्षा. तुमुल—cf. Tumult. वेजिता.—उद्वेजिताः ।

V. 40. तमः—darkness, fainting. तुतुदे—pas. perf. cf तुद् मोहे सति—यस्य च भावेन भावलक्षणम् Loca. abso.

V. 41. प्रभि॰ Poten. pas. part. मग्न-अवगाढा—Here अ of अव may be dropped according to भागुरि. So मग्न-वगाढा.

V. 42. करणानि Senses—sensation and so life. बिभ्रत् pre. part. of भृ.

V. 43. अभिन्नस्य etc., is a proverb. [illegible] perf. क्षेपः Throwing away, it need not be taken into account. It is श्रुतो अपि निरुक्.

नम्रत्वमिति प्रमथ्य व्यक्तं विभक्ता विपिने प्रिया मे ॥ मालतीमाधव. These things instead of cheering me excite my emotions and add to my grief.

V. 61. The union of a tree and a creeper is often described as a wedding by Sanskrit poets. शकुन्तला marries वनज्योत्स्ना with सहकार.

V. 62. फलिनी--प्रियगु-श्यामा are the names of one and the same creeper. दोहद —Hankering in pregnancy, craving felt by plants before flowering. नूपुरान्वितपादेन तरुण्या ताडितो भृशम् । अशोक कुसुमो वक्त्रसीधुसिक्तस्तु फुल्लति ॥ तरुगुल्मलतादीनाम् काले कुशलै कृतम् । पुष्पाद्युत्पादकं द्रव्यं दोहदः स्यात् तत्क्रिया ॥

V. 63. उत्प्रेक्षा. मृगाक्षी. बहु० ending in अंग, गात्र and कण्ठ take ङीप्-ई or आ in the fem.

V. 64. बकुल or केसर flowers have a lasting fragrance and a shape like that of a star. The व of स्वप is changed to उ which is called सम्प्रसारण-उत्; यणः सम्प्रसारणम् so the form in Pas. is सुप्यते

V. 65. On प्रतिपद the moon is invisible; therefore, by indication लक्षणा it should be taken to mean द्वितीया चन्द्र० is from किरात Canto III. Difficult to be remembered much more to be suffered; referring to the insult inflicted on द्रौपदी.

V. 66. [illegible] shows that ladies knew vocal and instrumental music in those days. Singing, playing on instruments, dancing, painting, drawing, etc.

burnt. See the funeral decorations prescribed by आश्वलायनः—प्रेतं स्नपयित्वा नलदेन ( fragrant root ) अनुलिप्य जपामालां प्रतिमुच्यमूलतोऽहतवाससा (a new cloth) पादमात्र-मवच्छाद्य etc. अग्नये—क्रियया यमभिप्रैति सोऽपि संप्रदानम् ।

V. 72. Why take with मल्लिनाथ सन् meaning विद्वान्? It means— being a king—a protector of men—and hence more firm-minded is not expected to give up his life as he has a responsibility to bear. अग्निसात्—साति is used in the sense of "under the control of".

V. 73. दशाहः—तद्धितार्थोत्तरपदसमाहारेच—तद्धितार्थे विषये When there is a secondary affix, उत्तरपदे च परतः when a compound has three terms, समाहारे च वाच्ये when an aggregate is meant, a word meaning a quarter or a number is compounded. दश is com. with अहन् in the sense of a number and then अहन् takes टच्. So दशाह. द्वन्द्व and तत्पु० ending in रात्र, अह्न and अह should be in the masc. gen. so दशाहः the word अहन् coming after सर्व etc. is changed to अह्न before any augment. But this change does not take place in a समाहार comp. beginning with a number. So दशाह + तस्. There are two kinds of funeral rites: Those, performed during the first ten days in the burning ground and those, performed after the tenth day at home, in a cowshed or a garden. Aja after the tenth day could have returned home but he did not go to his house, whence he had gone with wife, with-

(1) विषमे ससजा गुरुः समे सभरा लोऽथ गुर्वियोगिनी ।

(2) इह तोटकमम्बुधिसैः प्रथितम् । or वद तोटकमब्धिसकारयुतम् । अब्धि means 4.

(3) त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् ।

(4) ज्ञेया वसन्ततिलका तभजा जगौ गः ।

(5) मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम् ॥

Out of these वियोगिनी, also called वैतालीय or सुन्दरी, is an अर्धसमवृत्त whose alternate quarters are similar and the rest are समवृत्तs, all of whose quarters are similar. A quarter is made of groups of three syllables each, called गणs or syllabic feet named म, न, भ, य, ज, र, स, and त (ल used in the definitions means लघु and ग गुरु.). These Ganas are given in the following verse:—

मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादि लघुर्यः ।
जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥

These may be symbolically represented thus: – long, ⌣ short.

| | | | |
|---|---|---|---|
| म | – – – | ज | ⌣ – ⌣ |
| न | ⌣ ⌣ ⌣ | र | – ⌣ – |
| भ | – ⌣ ⌣ | स | ⌣ ⌣ – |
| य | ⌣ – – | त | – – ⌣ |

Mark how a verse is scanned.

| मरणं | प्रकृतिः | शरीरि | णां | विकृति | र्जीवन | मुच्यते | बुधैः |
|---|---|---|---|---|---|---|---|
| ⌣ ⌣ – | ⌣ ⌣ – | ⌣ – ⌣ | – | ⌣ ⌣ – | – ⌣ ⌣ | – ⌣ – | ⌣ – |
| स | स | ज | ग | स | भ | र | ल ग |